न्यस्ताक्षरा धातुरसेन यत्र भूर्जत्वचः कुञ्जरबिन्दुशोणाः[१] ।
व्रजन्ति विद्याधरसुन्दरीणामनङ्गलेखक्रिययोपयोगम् ॥७॥
यः पूरयन्कीचकरन्ध्रभागान्दरीमुखोत्थेन समीरणेन ।
उद्गास्यतामिच्छति किन्नराणां तानप्रदायित्वमिवोपगन्तुम् ॥८॥
कपोलकण्डूः करिभिर्विनेतुं विघट्टितानां सरलद्रुमाणाम् ।
यत्र स्रुतक्षीरतया प्रसूतः सानूनि गन्धः सुरभीकरोति ॥९॥
वनेचराणां वनितासखानां दरीगृहोत्सङ्गनिषक्तभासः ।
भवन्ति यत्रौषधयो रजन्यामतैलपूराः सुरतप्रदीपाः ॥१०॥
उद्वेजयत्यङ्गुलिपार्ष्णिभागान्मार्गे शिलीभूतहिमेऽपि यत्र ।
न दुर्वहश्रोणिपयोधरार्ता भिन्दन्ति मन्दां गतिमश्वमुख्यः ॥११॥
दिवाकराद्रक्षति यो गुहासु लीनं दिवाभीतमिवान्धकारम् ।
क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैःशिरसां सतीव ॥१२॥
लांगूलविक्षेपविसर्पिशोभैरितस्ततश्चन्द्रमरीचिगौरैः ।
यस्यार्थयुक्तं गिरिराजशब्दं कुर्वन्ति बालव्यजनैश्चमर्यः ॥१३॥
यत्रांशुकाक्षेपविलज्जितानां यदृच्छया किंपुरुषाङ्गनानाम् ।
दरीगृहद्वारविलम्बिबिम्बास्तिरस्करिण्यो जलदा भवन्ति ॥१४॥
भागीरथीनिर्झरशीकराणां वोढा मुहुः कम्पितदेवदारुः ।
यद्वायुरन्विष्टमृगैः किरातैरासेव्यते भिन्नशिखण्डिबर्हः ॥१५॥
सप्तर्षिहस्तावचितावशेषाण्यधो विवस्वान्परिवर्तमानः ।
पद्मानि यस्याग्रसरोरुहाणि प्रबोधयत्यूर्ध्वमुखैर्मयूखैः ॥१६॥
यज्ञाङ्गयोनित्वमवेक्ष्य यस्य सारं धरित्रीधरणक्षमं च ।
प्रजापतिः कल्पितयज्ञभागं[२] शैलाधिपत्यं स्वयमन्वतिष्ठत् ॥१७॥

( मेना विवाहः )

स मानसीं मेरुसखः पितॄणां कन्यां कुलस्य स्थितये स्थितिज्ञः ।
मेनां मुनीनामपि माननीयामात्मानुरूपां विधिनोपयेमे ॥१८॥

१. कुञ्जरबिन्दुशोणा इत्यनेन परभागदर्शनीयत्वमपि भूर्जत्वचां प्रतिपादितमिति विवरणे स्पष्टम् ।

कालक्रमेणाथ[1] तयोः प्रवृत्ते स्वरूपयोग्ये सुरतप्रसङ्गे ।
मनोरमं यौवनमुद्वहन्त्या गर्भोऽभवद्भूधरराजपत्न्याः ॥१९॥
असूत सा नागवधूपभोग्यं मैनाकमम्भोनिधिबद्धसख्यम् ।
क्रुद्धेऽपि पक्षच्छिदि वृत्रशत्राववेदनाज्ञं कुलिशक्षतानाम् ॥२०॥

( पार्वतीजन्म )

अथावमानेन पितुः प्रयुक्ता दक्षस्य कन्या भवपूर्वपत्नी ।
सती सती योगविसृष्टदेहा तां जन्मने शैलवधूं प्रपेदे ॥२१॥
सा भूधराणामधिपेन तस्यां समाधिमत्यामुदपादि भव्या ।
सम्यक्प्रयोगादपरिक्षतायां नीताविवोत्साहगुणेन संपत् ॥२२॥
प्रसन्नदिक्पांसुविविक्तवातं शङ्खस्वनानन्तरपुष्पवृष्टि ।
शरीरिणां स्थावरजङ्गमानां सुखाय तज्जन्मदिनं बभूव ॥२३॥
तया दुहित्रा सुतरां सवित्री स्फुरत्प्रभामण्डलया चकासे ।
विदूरभूमिर्नवमेघशब्दादुद्भिन्नया रत्नशलाकयेव ॥२४॥

( बालक्रीडावर्णनम् )

दिने दिने सा परिवर्धमाना[2] लब्धोदया चान्द्रमसीव लेखा ।
पुपोष लावण्यमयान्विशेषाञ्ज्योत्स्नान्तराणीव कलान्तराणि ॥२५॥
तां पार्वतीत्याभिजनेन नाम्ना बन्धुप्रियां बन्धुजनो जुहाव ।
उमेति मात्रा तपसो[3] निषिद्धा पश्चादुमाख्यां सुमुखी जगाम ॥२६॥
महीभृतः पुत्रवतोऽपि दृष्टिस्तस्मिन्नपत्ये न जगाम तृप्तिम् ।
अनन्तपुष्पस्य मधोर्हि चूते द्विरेफमाला सविशेषसङ्गा ॥२७॥

१. पद्यमिदमर्वाचीनस्य कस्यचिन्न तु महाकवेः कालिदासस्य, प्राचीनैरधृतत्वादिति भरतमल्लिकः ।

२. यथा पूर्वपक्षप्रतिपदुदिता शशिकला प्रतिदिनमधिकाधिकज्योत्स्नान् कलारूपानवयवान् प्राप्नोति, तथेयमपि जन्मलाभानन्तरमनुदिनं लावण्यप्रचुरानवयवानुपलेभे इति नारायणः ज्योत्स्ना अन्तरे मध्ये येषां तानि 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये' इत्यमरः । भरत० ।

३. 'तपसे' अ, भ. पाभे. ।

४. पुत्रे विशिष्टस्नेहः कन्यायान्तु न तादृगिति व्यवहारः, अतः पुत्रे सत्यपि तस्यां पार्वत्यां महान् स्नेह इति पुत्रवत इत्युक्तः इति भरत० ।

प्रभामहत्या[1] शिखयेव दीपस्त्रिमार्गयेव त्रिदिवस्य मार्गः ।
संस्कारवत्येव गिरा मनीषी तया स पूतश्च विभूषितश्च ॥२८॥
मन्दाकिनीसैकतवेदिकाभिः सा कन्दुकैः कृत्रिमपुत्रकैश्च ।
रेमे मुहुर्मध्यगता सखीनां क्रीडारसं निर्विशतीव बाल्ये ॥२९॥
तां हंसमालाः[2] शरदीव गङ्गां महौषधिं[3] नक्तमिवात्मभासः ।
स्थिरोपदेशामुपदेशकाले प्रपेदिरे प्राक्तनजन्मविद्याः ॥३०॥

( यौवनवर्णनम् )

असंभृतं मण्डनमङ्गयष्टेरनासवाख्यं करणं मदस्य ।
कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात्परं साथ वयः प्रपेदे ॥३१॥
उन्मीलितं तूलिकयेव चित्रं सूर्यांशुभिर्भिन्नमिवारविन्दम् ।
बभूव तस्याश्चतुरस्रशोभि वपुर्विभक्तं नवयौवनेन ॥३२॥

( शरीरवर्णनम् )

अभ्युन्नताङ्गुष्ठनखप्रभाभिर्निक्षेपणाद्रागमिवोद्गिरन्तौ ।
आजहतुस्तच्चरणौ पृथिव्यां स्थलारविन्दश्रियमव्यवस्थाम्[4] ॥३३॥
सा राजहंसैरिव संनताङ्गी गतेषु लीलाञ्चितविक्रमेषु ।
व्यनीयत प्रत्युपदेशलुब्धैरादित्सुभिर्नूपुरशिञ्जितानि ॥३४॥
वृत्तानुपूर्वे च न चातिदीर्घे जङ्घे[5] शुभे सृष्टवतस्तदीये ।
शेषाङ्गनिर्माणविधौ विधातुर्लावण्य उत्पाद्य[6] इवास यत्नः ॥३५॥

१. पातालभूतलाकाशवाहिनीत्वाद् गङ्गायास्त्रिमार्गत्वम् । दीपशब्देनात्र ज्वालावर्तितैल-भाजनात्मकसमुदायो विवक्षितः । प्रभया महती प्रभामहती तृतीयासमासः । इति वल्लभः ।
२. हंसानां वर्षासु मानसे स्थितिः, पुनश्च शरदारम्भे स्वाभिमतेषु भागीरथीप्रदेशादिष्विति प्रसिद्धिः । यथा सूर्यप्रभाभिभूता निजा एव प्रभाः सूर्यप्रभातिरोभावे महौषधिं प्राप्नुवन्ति, तथा बाल्यादप्रकाशमाना वासनारूपेण पूर्वमपि विद्यमाना विद्यास्तामपीति नारायणः ।
३. 'महौषधीनक्त-' भ, व, पाभे. ।
४. अव्यवस्थां परिच्छेत्तुमशक्यां 'व्यवस्था स्यात् परिच्छेदे अवस्थास्थानयोरपी' ति शब्द-महार्णवः । भरत० ।
५. 'ह्रस्वजङ्घां स्त्रियं त्यजेद्' इत्यादिसामुद्रिकस्त्रीदोषविशेषनिषेधपरमिदं विशेषणं इति नारायणः ।
६. 'उत्पत्तमि-' इति ना० पाभे. ।

नागेन्द्रहस्तास्त्वचि कर्कशत्वादेकान्तशैत्यात्कदलीविशेषाः ।
लब्ध्वापि लोके परिणाहि[१] रूपं जातास्तदूर्वोरुपमानबाह्याः ॥३६॥

एतावता नन्वनुमेयशोभि[२] काञ्चीगुणस्थानमनिन्दितायाः ।
आरोपितं यद्गिरिशेन[३] पश्चादनन्यनारीकमनीयमङ्कम् ॥३७॥

तस्याः प्रविष्टा नतनाभिरन्ध्रं रराज तन्वी नवरोमराजिः ।
नीवीमतिक्रम्य सितेतरस्य तन्मेखलामध्यमणेरिवार्चिः ॥३८॥

मध्येन सा वेदिविलग्नमध्या[४] वलित्रयं चारु बभार बाला ।
आरोहणार्थं नवयौवनेन कामस्य सोपानमिव प्रयुक्तम् ॥३९॥

अन्योन्यमुत्पीडयदुत्पलाक्ष्याः स्तनद्वयं पाण्डु तथा प्रवृद्धम् ।
मध्ये यथा श्याममुखस्य तस्य मृणालसूत्रान्तरमप्यलभ्यम्[५] ॥४०॥

शिरीषपुष्पाधिकसौकुमार्यौ[६] बाहू तदीयाविति मे वितर्कः[६] ।
पराजितेनापि कृतौ हरस्य यौ कण्ठपाशौ मकरध्वजेन[७] ॥४१॥

कण्ठस्य तस्याः स्तनबन्धुरस्य मुक्ताकलापस्य च निस्तलस्य ।
अन्योन्यशोभाजननाद्बभूव साधारणो भूषणभूष्यभावः ॥४२॥

चन्द्रं गता पद्मगुणान्न भुङ्क्ते[८] पद्माश्रिता चान्द्रमसीमभिख्याम् ।
उमामुखं तु प्रतिपद्य लोला द्विसंश्रयां प्रीतिमवाप लक्ष्मीः ॥४३॥

१. परिणाहोऽस्यास्तीति परिणाहि । नागमात्रहस्तस्य कदलीमात्रस्य च नैतदूरुतुल्य-परिणाहिरूपत्वमपि इति इन्द्रविशेषशब्दौ प्रयुक्तौ । इति केचित् ।

२. 'नन्वनुमेयशोभनं' इति ना० पाभे. ।

३. अत्र वर्ण्यमानावस्थानेक्षया पश्चाच्छब्दः । गिरिशेन न तु गिरिशस्य । अङ्कमुत्सङ्गमा-रोपितम्, न त्वारूढम् । जगदीश्वरेण स्वयमेव रागातिशयादारोपितम्, न तु देव्या गिरि-शस्याङ्कमारूढमिति भाव इति नारायणः ।

४. वेद्याः कृशमध्यत्वं प्रसिद्धमिति नारायणः ।

५. अन्यत्रापि धनादिना वर्द्धितौ पुरुषौ परस्परं बाधेते । अत्यन्तघनत्वेन संलग्नत्वात् मृणालसूत्रमपीषत्प्रासावकाशमित्यर्थः । ईषदर्थे नञिति भरतः ।

६. 'मालाधिक-' ना० पाभे. । 'प्रतर्कः' ना० पाभे. ।

७. यो मकरध्वजः पूर्वं दर्पाद् देवमासाद्य विफलीभूतसुकुमारतरपूर्वोपकरणो जातः, स एव याभ्यां पशुमिव रज्ज्वा कण्ठे निबध्याऽऽत्मविधेयं चकार तयोः सौकुमार्यं कथं शिरीष-कुसुमादिभिरुपमातुं शक्यमिति भावः । इति नारायणः ।

८. "सर्वकालरमणीयस्वाभाविकसौरभ्याभिरामं देवीवदनं प्राप्य तु लक्ष्मीश्चन्द्रपद्मानु-भवजन्यां प्रीतिमाससादेत्यर्थः । भुङ्क्ते "भुजोऽनवने" (१, ३, ६६ पा०) इत्यात्मने-पदमिति नारायणः ।

पुष्पं प्रवालोपहितं[1] यदि स्यान्मुक्ताफलं वा स्फुटविद्रुमस्थम् ।
ततोऽनुकुर्याद्विशदस्य तस्यास्ताम्रौष्ठपर्यस्तरुचेः स्मितस्य ॥४४॥
स्वरेण तस्याममृतस्रुतेव प्रजल्पितायामभिजातवाचि ।
अप्यन्यपुष्टा प्रतिकूलशब्दा श्रोतुर्वितन्त्रीरिव[2] ताड्यमाना ॥४५॥
प्रवातनीलोत्पलनिर्विशेषमधीरविप्रेक्षितमायताक्ष्या ।
तया गृहीतं नु मृगाङ्गनाभ्यस्ततो गृहीतं नु मृगाङ्गनाभिः ॥४६॥
तस्याः शलाकाञ्जननिर्मितेव कान्तिर्भ्रुवोरायतलेखयोर्या ।
तां वीक्ष्य लीलाचतुरामनङ्गः स्वचापसौन्दर्यमदं मुमोच ॥४७॥
लज्जा तिरश्चां यदि चेतसि स्यादसंशयं पर्वतराजपुत्र्याः ।
तं केशपाशं प्रसमीक्ष्य कुर्युर्वालप्रियत्वं शिथिलं चमर्यः[3] ॥४८॥
सर्वोपमाद्रव्यसमुच्चयेन यथाप्रदेशं विनिवेशितेन ।
सा निर्मिता विश्वसृजा प्रयत्नादेकस्थसौन्दर्यदिदृक्षयेव[4] ॥४९॥

(नारदागमने पार्वतीविवाहप्रस्तावः)

तां नारदः कामचरः कदाचित्कन्यां किल प्रेक्ष्य पितुः समीपे ।
समादिदेशैकवधूं भवित्रीं प्रेम्णः शरीरार्धहरां हरस्य ॥५०॥
गुरुः प्रगल्भेऽपि वयस्यतोऽस्यास्तस्थौ निवृत्तान्यवराभिलाषः ।
ऋते कृशानोर्न हि मन्त्रपूतमर्हन्ति तेजांस्यपराणि हव्यम् ॥५१॥
अयाचितारं न हि देवदेवमद्रिः सुतां ग्राहयितुं शशाक ।
अभ्यर्थनाभङ्गभयेन साधुर्माध्यस्थ्यमिष्टेऽप्यवलम्बतेऽर्थे ॥५२॥

१. चन्द्रिकादीनां तादृशधावल्ये सत्यपि ताम्रद्रव्योपहितत्वाभावान्नानुकरणसामर्थ्यमिति भावः। इति नारायणः। "ईषद्विकसितैर्दन्तैः कटाक्षैः सौष्ठवान्वितैः। अलक्षितद्विजद्वारं स्मितमिच्छन्ति सूरयः ॥" इति रघुनाथः।

२. देवीवचनान्तराले सञ्जल्पन्ती कोकिलाऽपि वीणायाः समीचीनवादन-वेलायामक्रमताडिता वीणागुणवल्लरीव श्रोतृजनानामरुन्तुदमेव शब्दमुत्पादयामासेति भावः। इति नारायणः।

३. चमरीणां देवीकेशपाशदर्शने सत्यपि यदेताः स्वलाङ्गूलेष्वादरं कुर्वन्ति, तिर्यग्योनिजातानामेतासां लज्जाभाव एव तत्र हेतुरिति भावः। इति नारायणः।

४. अत्र तत इतो विप्रकीर्णानि चन्द्रकमलाद्युपमाद्रव्याणि प्रयत्नादेकत्र समानीय पुनश्च तानि यथोचितप्रदेशं रमणीयतया विन्यस्य ब्रह्मणस्तदङ्गनिर्माणमित्युत्प्रेक्ष्यते, एकस्थसौन्दर्यदिदृक्षा तु तत्र हेतुत्वेन। अनेनोत्प्रेक्षाद्वयेन च देवीसौन्दर्यस्य लोकोत्तरत्वं

यदैव पूर्वे जनने शरीरं सा दक्षरोषात्सुदती ससर्ज ।
तदाप्रभृत्येव विमुक्तसङ्गः पतिः[1] पशूनामपरिग्रहोऽभूत् ॥५३॥
स कृत्तिवासास्तपसे[2] यतात्मा गङ्गाप्रवाहोक्षितदेवदारु[3] ।
प्रस्थं हिमाद्रेर्मृगनाभिगन्धि किञ्चित्क्वणत्किन्नरमध्युवास ॥५४॥
गणा नमेरुप्रसवावतंसा भूर्जत्वचः स्पर्शवतीर्दधानाः ।
मनः शिलाविच्छुरिता निषेदुः शैलेयनद्धेषु शिलातलेषु ॥५५॥

( हरावतारः )

तुषारसंघातशिलाः खुराग्रैः समुल्लिखन्दर्पकलः ककुद्मान् ।
दृष्टः कथंचिद्गवयैर्विविग्नैरसोढसिंहध्वनिरुन्ननाद ॥५६॥
तत्राग्निमाधाय समित्समिद्धं स्वमेव मूर्त्यन्तरमष्टमूर्तिः ।
स्वयं विधाता तपसः फलानां केनापि कामेन तपश्चचार ॥५७॥
अनर्घ्यमर्घ्येण तमद्रिनाथः स्वर्गौकसामर्चितमर्चयित्वा ।
आराधनायास्य सखीसमेतां[4] समादिदेश प्रयतां तनूजाम् ॥५८॥

( उमाशुश्रूषाङ्गीकारः )

प्रत्यर्थिभूतामपि तां समाधेः शुश्रूषमाणां[5] गिरिशोऽनुमेने ।
विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः ॥५९॥
अवचितबलिपुष्पा वेदिसंमार्गदक्षा नियमविधिजलानां बर्हिषां चोपनेत्री ।
गिरिशमुपचचार प्रत्यहं सा सुकेशीनियमितपरिखेदा[5] तच्छिरश्चन्द्रपादैः ॥६०॥

इति श्रीकालिदासकृते कुमारसम्भवे महाकाव्ये उमोत्पत्तिर्नाम प्रथमः सर्गः ।१।

१. पशवः संसारिणस्तेषां पतिस्त्राता वा । "इन्द्रादिकीटपर्यन्ताः पशुशब्देन संज्ञिताः । तेषाञ्च पतिरेवाहं तस्मात् पशुपतिः स्मृतः ॥"
इति भविष्यपुराणे । अमरकोषटीकायां रघुनाथश्च ।

२. कृत्तिवासा इत्यनेन तपःपरिकरभूतमजिनधारणमुक्तम् । किञ्चिदित्यनेन देवस्य प्रस्थविशेषानादर उक्तः । गङ्गाप्रवाहेत्यादिना प्रस्थस्य पावनत्वं जलबाहुल्यं छायासौख्यं चोक्तम् । मृगनाभीत्यादिना विशेषणद्वयेन प्रस्थस्य रमणीयत्वमुक्तम् । देवस्यातिधीरत्वाद् रमणीयवस्तुसन्निधावपि समाधिभङ्गशङ्का नाभूदिति द्योत्यते । उक्तं च शाकुन्तले—प्राणानामनिलेन वृत्ति रुचिता सत्कल्पवृक्षे वने (७, १२) इति नारायणः ।

३. गङ्गाप्रपातोत्थितदेवदारु" इति पाभे० ।

४. सखीसमग्रां' इति ना० पाभे ।

५. शुश्रूषाशब्दश्च कार्यलक्षणया परिचर्यायां रूढ इति केचित् ।
सुकेशीत्यत्र केश इत्युपलक्षणम्, शोभनाङ्गीत्यर्थः । इति भरत० ।

# द्वितीयः सर्गः

(तारकागमनम्)

तस्मिन्विप्रकृताः काले तारकेण दिवौकसः ।
तुरासाहं पुरोधाय धाम स्वायंभुवं ययुः ॥१॥
तेषामाविरभूद्ब्रह्मा[1] परिम्लानमुखश्रियाम् ।
सरसां सुप्तपद्मानां प्रातर्दीधितिमानिव ॥२॥

(ब्रह्मस्तुतिः)

अथ सर्वस्य धातारं ते सर्वे सर्वतोमुखम् ।
वागीशं[2] वाग्भिरर्थ्याभिः प्रणिपत्योपतस्थिरे ॥३॥
नमस्त्रिमूर्तये तुभ्यं प्राक् सृष्टेः केवलात्मने ।
गुणत्रयविभागाय पश्चाद्भेदमुपेयुषे ॥४॥
यदमोघमपामन्तरुप्तं बीजमज त्वया[3] ।
अतश्चराचरं विश्वं प्रभवस्तस्य गीयसे ॥५॥
तिसृभिस्त्वमवस्थाभिर्महिमानमुदीरयन्[4] ।
प्रलयस्थितिसर्गाणामेकः कारणतां गतः ॥६॥
स्त्रीपुंसावात्मभागौ ते भिन्नमूर्तेः सिसृक्षया ।
प्रसूतिभाजः सर्गस्य तावेव पितरौ स्मृतौ ॥७॥

१. तेषाम् इति, सम्बन्धे षष्ठी चेयम् । आविरभूदित्यनेन स्वयमनुग्रहोन्मुख आत्मानं दर्शितवान्, न तु ते स्वप्रयत्नेन ददृशुरिति द्योत्यत इति । नाथः ।

२. वाचः सरस्वत्याः ईशं भर्त्तारं वागीशम् । नारायणः ।

३. त्वया पूर्वं जलं निर्माय तदन्तर्भागे निषिक्तस्य वीर्यस्य विभूतिरेव चराचरात्मकमिदं विश्वमिति मन्वादयो वदन्तीत्यर्थः । इति नारायणः । 'अतश्चराचरं विश्वं प्रभावस्तस्य गीयते' इति नाथः ।

४. एकमूर्त्तिस्त्रयो देवा रुद्रविष्णुपितामहा इति स्मृतिः ॥ इति भरतः । अनेन स्थितिप्रलययोर्विष्णुरुद्रोपज्ञत्वप्रतीतिर्निरस्ता । इति नारायणः ।

स्वकालपरिमाणेन व्यस्तरात्रिंदिवस्य ते ।
यौ तु स्वप्नावबोधौ तौ भूतानां प्रलयोदयौ ॥८॥
जगद्योनिरयोनिस्त्वं जगदन्तो निरन्तकः ।
जगदादिरनादिस्त्वं जगदीशो निरीश्वरः ॥९॥
आत्मानमात्मना वेत्सि सृजस्यात्मानमात्मना ।
आत्मना कृतिना च त्वमात्मन्येव प्रलीयसे ॥१०॥
द्रवः संघातकठिनः स्थूलः सूक्ष्मो लघुर्गुरुः ।
व्यक्तो व्यक्तेतरश्चासि प्राकाम्यन्ते विभूतिषु ॥११॥
उद्घातः प्रणवो यासां न्यायैस्त्रिभिरुदीरणम्[1] ।
कर्म यज्ञः फलं स्वर्गस्तासां त्वं प्रभवो गिराम् ॥१२॥
त्वामामनन्ति प्रकृतिं पुरुषार्थप्रवर्तिनीम् ।
तद्दर्शिनमुदासीनं त्वामेव पुरुषं विदुः ॥१३॥
त्वं[2] पितॄणामपि पिता देवानामपि देवता[3] ।
परतोऽपि परश्चासि विधाता वेधसामपि ॥१४॥
त्वमेव हव्यं होता च भोज्यं भोक्ता च शाश्वतः[4] ।
वेद्यं च वेदिता चासि ध्याता ध्येयं च यत्परम् ॥१५॥
इति तेभ्यः स्तुतीः श्रुत्वा यथार्था हृदयंगमाः ।
प्रसादाभिमुखो वेधाः प्रत्युवाच दिवौकसः ॥१६॥
पुराणस्य कवेस्तस्य चतुर्मुखसमीरिता ।
प्रवृत्तिरासीच्छब्दानां चरितार्था चतुष्टयी ॥१७॥

१. त्रिभिर्न्यायैरभिधानैरुत्तममध्यमाधमैरित्यन्ये, ऋग्यजुःसामलक्षणैरिति केचित्, मुख्यलाक्षणिकगौणरूपैरिति केचित्, अध्ययनाध्यापनकर्मभिः उदीरणं प्रकाशनं कथनमिति यावत् इति केचित् । या गिरः प्रणवोच्चारणपूर्वकमुच्चार्यन्त इत्यर्थः इति भरतः ।

२. त्वं परतोऽपि इन्द्रियेभ्योऽपि परोऽगोचरोऽसि भवसि । अन्ये तु 'परतः परेषां श्रेष्ठानां रुद्रादीनां तपस्विनां वा मध्ये त्वं परः श्रेष्ठ' इत्याहुः । इति भरतः । पितॄणामपि अपिशब्दः पितॄणां पुराणप्रसिद्धसर्वोत्कर्षमाह, 'इज्यते पितरो देवैः सुरेन्द्रादिभिरप्युत' इत्युक्तत्वात् । इति नारायणः ।

३. 'दैवतम्' इति । नारायणः ।

४. शाश्वतम । अव्यक्तरूपत्वान्नपंसकनिर्देश इति भरतः ।

( ब्रह्मसाक्षात्कारः )

स्वागतं स्वानधीकारान्प्रभावैरवलम्ब्य वः ।
युगपद्युगबाहुभ्यः प्राप्तेभ्यः प्राज्यविक्रमाः ॥१८॥
किमिदं द्युतिमात्मीयां न बिभ्रति यथा पुरा[1] ।
हिमक्लिष्टप्रकाशानि[2] ज्योतींषीव मुखानि वः ॥१९॥
प्रशमादर्चिषामेतदनुद्गीर्णसुरायुधम्[3] ।
वृत्रस्य हन्तुः कुलिशं कुण्ठिताश्रीव लक्ष्यते ॥२०॥
किञ्चायमरिदुर्वारः पाणौ पाशः प्रचेतसः ।
मन्त्रेण हतवीर्यस्य फणिनो दैन्यमाश्रितः ॥२१॥
कुबेरस्य मनःशल्यं शंसतीव पराभवम् ।
अपविद्धगदो बाहुर्भग्नशाख इव द्रुमः ॥२२॥
यमोऽपि विलिखन् भूमिं दण्डेनास्तमितत्विषा ।
कुरुतेऽस्मिन्नमोघेऽपि निर्वाणालातलाघवम् ॥२३॥
अमी च कथमादित्याः प्रतापक्षतिशीतलाः[4] ।
चित्रन्यस्ता इव गताः प्रकामालोकनीयताम्[5] ॥२४॥
पर्याकुलत्वान्मरुतां वेगभङ्गोऽनुमीयते ।
अम्भसामोघसंरोधः प्रतीपगमनादिव ॥२५॥
आवर्जितजटामौलिविलम्बिशशिकोटयः ।
रुद्राणामपि मूर्धानः क्षतहुंकारशंसिनः[6] ॥२६॥
लब्धप्रतिष्ठाः प्रथमं यूयं किं बलवत्तरैः ।
अपवादैरिवोत्सर्गाः कृतव्यावृत्तयः परैः ॥२७॥
तद्ब्रूत वत्साः किमितः प्रार्थयध्वं[7] समागताः ।
मयि सृष्टिर्हि लोकानां रक्षा युष्मास्ववस्थिता ॥२८॥

१. 'यथापुरं' नारायणः ।
२. 'हिमक्लिष्टप्रसादानि' इति नारायणः, 'हिमक्लिष्टप्रभावाणि' इति भरत० ।
३. '-दवद्गूर्णसुरायुध'मिति भरतः ।
४. '-क्षयशीतलाः' नारायणः, '-क्षितिशीतलाः' भरत० ।
५. 'प्रकामालोकदर्शिनः' भरत० ।
६. 'क्षताह-' ना, श्र, भ, व पाभे० ।
७. "प्रार्थय०व" इति ना० भ० ।

ततो मन्दानिलोद्धूतकमलाकरशोभिना ।
गुरुं नेत्रसहस्रेण नोदयामास[1] वासवः ॥२९॥

(वाचस्पत्युक्तिः)

स द्विनेत्रं[2] हरेश्चक्षुः सहस्रनयनाधिकम् ।
वाचस्पतिरुवाचेदं प्राञ्जलिर्जलजासनम् ॥३०॥
एवं यदात्थ भगवन्नामृष्टं नः परैः पदम् ।
प्रत्येकं विनियुक्तात्मा कथं न ज्ञास्यसि प्रभो[3] ॥३१॥

(तारकासुरनृशंसत्वम्)

भवल्लब्धवरोदीर्णस्तारकाख्यो[4] महासुरः ।
उपप्लवाय लोकानां धूमकेतुरिवोत्थितः ॥३२॥
पुरे तावन्तमेवास्य तनोति रविरातपम् ।
दीर्घिकाकमलोन्मेषो यावन्मात्रेण साध्यते[5] ॥३३॥
सर्वाभिः सर्वदा चन्द्रस्तं कलाभिर्निषेवते ।
नादत्ते[6] केवलां लेखां हरचूडामणीकृताम् ॥३४॥
व्यावृत्तगतिरुद्याने कुसुमस्तेयसाध्वसात्[7] ।
न वाति वायुस्तत्पार्श्वे तालवृन्तानिलाधिकम् ॥३५॥
पर्यायसेवामुत्सृज्य पुष्पसंभारतत्पराः ।
उद्यानपालसामान्यमृतवस्तमुपासते ॥३६॥
तस्योपायनयोग्यानि रत्नानि सरितां पतिः ।
कथमप्यम्भसामन्तरानिष्पत्तेः प्रतीक्षते ॥३७॥

१. "चोदयामास वृत्रहा" इति भ० व० पाभे० ।
२. विनेतृ हरेश्चक्षुर्दशवक्षःशताधिकम्) इति नाथ० ।
३. 'ज्ञास्यति प्रभुः' इति भ० म० ।
४. 'त्वया दत्तवरो-' इति व० भ० नारायणः ।
५. 'सिध्यति' इति नारायणः ।
६. "नादत्त इति, हरचूडामणीकृतत्वेन ग्रहीतुमशक्यत्वात्, 'अग्राह्यं शिवनिर्माल्यम्' इति शिवनिर्माल्यस्य त्याज्यत्वादिति केचित् । हरशब्दोपादानेन संहारभयादिति केचिदि''ति भरतः ।
७. साहसात्' ना० ।

ज्वलन्मणिशिखाश्चैनं वासुकिप्रमुखा निशि ।
स्थिरप्रदीपतामेत्य भुजङ्गाः पर्युपासते ॥३८॥
तत्कृतानुग्रहापेक्षी तं मुहुर्दूतहारितैः ।
अनुकूलयतीन्द्रोऽपि[1] कल्पद्रुमविभूषणैः ॥३९॥
इत्थमाराध्यमानोऽपि क्लिश्नाति भुवनत्रयम् ।
शाम्येत्प्रत्यपकारेण नोपकारेण दुर्जनः ॥४०॥
तेनामरवधूहस्तैः सदयालूनपल्लवाः ।
अभिज्ञाश्छेदपातानां[2] क्रियन्ते नन्दनद्रुमाः ॥४१॥
वीज्यते स हि संसुप्तः श्वाससाधारणानिलैः ।
चामरैः सुरबन्दीनां बाष्पशीकरवर्षिभिः ॥४२॥
उत्पाट्य मेरुशृङ्गाणि क्षुण्णानि हरितां खुरैः ।
आक्रीडपर्वतास्तेन कल्पिताः स्वेषु वेश्मसु ॥४३॥
मन्दाकिन्याः पयः शेषं दिग्वारणमदाविलम् ।
हेमाम्भोरुहशस्यानां तद्वाप्यो धाम साम्प्रतम् ॥४४॥
भुवनालोकनप्रीतिः स्वर्गिभिर्नानुभूयते ।
खिलीभूते[3] विमानानां[4] तदापातभयात्पथि ॥४५॥
यज्वभिः संभृतं हव्यं विततेष्वध्वरेषु सः ।
जातवेदोमुखान्मायी मिषतामाच्छिनत्ति नः ॥४६॥
उच्चैरुच्चैःश्रवास्तेन हयरत्नमहारि च ।
देहबद्धमिवेन्द्रस्य चिरकालार्जितं यशः ॥४७॥
तस्मिन्नुपायाः सर्वे नः क्रूरे प्रतिहतक्रियाः ।
वीर्यवन्त्यौषधानीव विकारे सान्निपातिके ॥४८॥

१. "इन्द्रस्त्रैलोक्याधिपतित्वाभिमानिनमात्मानं प्रति समत्सरस्य विशेषतश्चासुरविजयिनस्तारकासुरस्य संश्रयवृत्त्याऽप्यानुकूल्यकरणमशक्यमिति निश्चिन्वानो ग्रहणबन्धनादिभयात् सन्निधिं परिहृत्य दूरावस्थित एव तदनुग्रहमाकाङ्क्षमाणः प्रतिक्षणं दूतजनप्रापितैः कल्पद्रुमविभूषणैस्तमनुवर्त्तते । 'तं भूमिद्रव्याभ्यामुपगृह्यागाह्यः प्रतिकुर्वीत' (१२।१।१६२) इति कौटिल्योक्तप्रकारोऽनेन दर्शित इति वेदितव्यम् ।" इति नारायणः ।

२. '-छिन्नपातानां' इति नाथ-नारायणौ ।

३. 'खिलीकृते' इति नारायणः । ४. 'तदाघात-' इति नारायणः ।

५. 'खिलमप्रहतस्थानमि'ति भोजः ।

जयाशा यत्र चास्माकं प्रतिघातोत्थितार्चिषा[1] ।
हरिचक्रेण तेनास्य कण्ठे निष्कमिवार्पितम् ॥४९॥
तदीयास्तोयदेष्वद्य पुष्करावर्तकादिषु ।
अभ्यस्यन्ति तटाघातं निर्जितैरावता गजाः ॥५०॥

( सेनानीप्रस्तावः )

तदिच्छामो विभो स्रष्टुं सेनान्यं तस्य शान्तये ।
कर्मबन्धच्छिदं धर्मं भवस्येव मुमुक्षवः ॥५१॥
गोप्तारं सुरसैन्यानां यं पुरस्कृत्य गोत्रभित् ।
प्रत्यानेष्यति शत्रुभ्यो वन्दीमिव जयश्रियम् ॥५२॥
वचस्यवसिते तस्मिन् ससर्ज[2] गिरमात्मभूः ।
गर्जितानन्तरं वृष्टिं सौभाग्येन जिगाय सा ॥५३॥

( हरांशसैनापत्यप्रस्तावः )

संपत्स्यते वः कामोऽयं कालः कश्चित्प्रतीक्ष्यताम् ।
न त्वस्य सिद्धौ यास्यामि सर्गव्यापारमात्मना[3] ॥५४॥
इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम् ।
विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम् ॥५५॥
वृतं तेनेदमेव प्राङ् मया चास्मै प्रतिश्रुतम् ।
वरेण[4] शमितं लोकानलं दग्धुं हि तत्तपः ॥५६॥
संयुगे सांयुगीनं[5] तमुद्यतं[6] प्रसहेत कः ।
अंशादृते निषिक्तस्य[7] नीललोहितरेतसः ॥५७॥
स हि देवः परं ज्योतिस्तमः पारे व्यवस्थितम्[8] ।
परिच्छिन्नप्रभावर्द्धिर्न मया न च विष्णुना ॥५८॥
उमारूपेण ते यूयं संयमस्तिमितं मनः ।
शंभोर्यतध्वमाक्रष्टुमयस्कान्तेन लोहवत् ॥५९॥

१. 'प्रतिघातोद्गतार्चिषा' इति नारायणः ।
२. 'तस्य' ना० पाभे० । ३. '-मात्मनः' ना-पाभे० ।
४. 'वरेणाशमितं' ना० पाभे० पाठः, 'वरेण शमितु'' अ पाभे० ।
५. 'सम्मुखीनं' । ६. 'तमुद्गदं' । ७. 'निषिक्तात्तु', ना० पाभे० । ८. 'प्रतिष्ठितम्' इति अन्य पाभे० ।

उभे एव क्षमे वोढुमुभयोर्बीजमाहितम् ।
सा वा शंभोस्तदीया वा मूर्तिर्जलमयी मम ॥६०॥
तस्यात्मा शितिकण्ठस्य सैनापत्यमुपेत्य वः ।
मोक्ष्यते[1] सुरबन्दीनां वेणीर्वीर्यविभूतिभिः ॥६१॥
इति व्याहृत्य विबुधान्विश्वयोनिस्तिरोदधे ।
मनस्याहितकर्तव्यास्तेऽपि देवा दिवं ययुः ॥६२॥
तत्र निश्चित्य कंदर्पमगमत्पाकशासनः ।
मनसा कार्यसंसिद्धि त्वराद्विगुणरंहसा ॥६३॥
अथ स ललितयोषिद्भ्रूलताचारुशृङ्गं
रतिवलयपदाङ्के चापमासज्य कण्ठे ।
सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्रः
शतमखमुपतस्थे प्राञ्जलिः पुष्पधन्वा ॥६४॥

इति श्रीकालिदासकृते कुमारसम्भवे महाकाव्ये ब्रह्माभिगमनो नाम द्वितीयः सर्गः ।२।

१. भर्तृविरहिता हि कुलस्त्रियः स्वकेशान् भर्तृसमागमपर्यन्तं दृढं निबध्नन्ति । यथोक्तं शाकुन्तले—'वसने परिधूसरे वसाना इति" नारायणः ।

# तृतीयः सर्गः

( मदनाह्वानम् )

तस्मिन्मघोनस्त्रिदशान्विहाय सहस्रमक्ष्णां युगपत् पपात ।
प्रयोजनापेक्षितया प्रभूणां प्रायश्चलं गौरवमाश्रितेषु ॥१॥
स वासवेनाऽऽसनसन्निकृष्टमितो निषीदेति विसृष्टभूमिः ।
भर्तुः प्रसादं प्रतिनन्द्य मूर्ध्ना वक्तुं मिथः प्राक्रमतैवमेनम् ॥२॥
आज्ञापय ज्ञातविशेष पुंसां लोकेषु यत्ते करणीयमस्ति ।
अनुग्रहं संस्मरणप्रवृत्तमिच्छामि संवर्धितमाज्ञया ते ॥३॥

( शुश्रूषाजिज्ञासा )

केनाभ्यसूया पदकाङ्क्षिणा ते नितान्तदीर्घैर्जनिता तपोभिः ।
यावद्भवत्याहितसायकस्य मत्कार्मुकस्यास्य निदेशवर्ती ॥४॥
असम्मतः कस्तव मुक्तिमार्गं पुनर्भवक्लेशभयात्प्रपन्नः ।
बद्धश्चिरं तिष्ठतु सुन्दरीणामारेचितभ्रूचतुरैः कटाक्षैः[1] ॥५॥
अध्यापितस्योशनसाऽपि नीतिं प्रयुक्तरागप्रणिधिर्द्विषस्ते ।
कस्यार्थधर्मौ वद पीडयामि[2] सिन्धोस्तटावोघ इव प्रवृद्धः ॥६॥
कामेकपत्नीव्रतदुःखशीलां लोलं मनश्चारुतया प्रविष्टाम् ।
नितम्बिनीमिच्छसि[3] मुक्तलज्जां कण्ठे स्वयंग्राहनिषक्तबाहुम ॥७॥
कयाऽसि कामिन् सुरतापराधात्पादानतः[4] कोपनयाऽवधूतः[5] ।
तस्याः[6] करिष्यामि दृढानुतापं प्रवालशय्याशरणं शरीरम् ॥८॥

१. रैवलासैः इति पाभे० ।

२. पीडयानि इति नारायण-पाभे० ।

३. विलम्बिनी इति अरुण-पाभे० । ४. सहसाऽपराधात् इति पाठः, सुरतापराधे इति अरुण-पाभे० ।

५. कोपितया इति अरुण-पाभे० । ६. यस्याः इति नारायण-पाभे० ।

प्रसीद विश्राम्यतु वीर वज्रं शरैर्मदीयैः कतमः सुरारिः ।
बिभेतु मोघीकृतबाहुवीर्यः स्त्रीभ्योऽपि कोपस्फुरिताधराभ्यः ॥९॥
तव प्रसादात्कुसुमायुधोऽपि सहायमेकं मधुमेव लब्ध्वा ।
कुर्यां हरस्यापि पिनाकपाणेर्धैर्यच्युतिं के मम धन्विनोऽन्ये ॥१०॥

( इन्द्रादेशः )

अथोरुदेशादवतार्य पादमाक्रान्तिसंभावितपादपीठम्[1] ।
संकल्पितार्थे[2] विवृतात्मशक्तिमाखण्डलः काममिदं बभाषे ॥११॥
सर्वं सखे त्वय्युपपन्नमेतदुभे ममास्त्रे कुलिशं भवांश्च ।
वज्रं[3] तपोवीर्यमहत्सु कुण्ठं त्वं सर्वतोगामि च साधकश्च ॥१२॥
अवैमि ते सारमतः खलु त्वां कार्ये गुरुण्यात्मसमं नियोक्ष्ये ।
व्यादिश्यते भूधरतामवेक्ष्य कृष्णेन देहोद्वहनाय शेषः ॥१३॥
आशंसता बाणगतिं वृषाङ्के कार्यं त्वया नः प्रतिपन्नकल्पम् ।
निबोध [4]यज्ञांशभुजामिदानीमुच्चै[5]र्द्विषामीप्सितमेतदेव[6] ॥१४॥
अमी हि वीर्यप्रभवं[7] भवस्य[8] जयाय सेनान्यमुशन्ति देवाः ।
स च त्वदेकेषुनिपातसाध्यो ब्रह्माङ्गभूर्ब्रह्मणि योजितात्मा ॥१५॥
तस्मै हिमाद्रेः प्रयतां तनूजां यतात्मने रोचयितुं[9] यतस्व ।
योषित्सु तद्वीर्यनिषेकभूमिः सैव क्षमेत्यात्मभुवोपदिष्टम् ॥१६॥
गुरोर्नियोगाच्च नगेन्द्रकन्या स्थाणुं तपस्यन्तमधित्यकायाम् ।
अन्वास्त[10]इत्यप्सरसां मुखेभ्यः श्रुतं मया मत्प्रणिधिः स वर्गः ॥१७॥
तद्गच्छ सिद्ध्यै कुरु देवकार्यमर्थोऽयमर्थान्तरभाव्य[11] एव ।
अपेक्षते प्रत्ययमुत्तमं त्वां बीजाङ्कुरः प्रागुदयादिवाम्भः ॥१८॥

१. सम्मानित अ, भ-पाभे० । २. सङ्कल्पितेऽर्थे पाभे० ।
३. पूर्वं ना, भ० पाभे० ।
४. यज्ञाङ्ग इति अ-पाभे० । ५. मुच्चैस्तरामी इति नारायणः पाभे० ।
६. मर्थमत्र इति पाभे० ।
७. हरस्य इति ना०-पाभे० । ८. हार्यो इति ना०-पाभे० । ९. योजयितुं इति अ-पाभे० ।
१०. अध्यास्त इति अ-पाभे० ।
११. लभ्य इति अ-पाभे० ।
१२. नहि जलमन्तरेण क्षितिपवनादिसंयुक्ताद् बीजादङ्कुरोत्पत्तिरिति भावः इति ना० ।

[1]तस्मिन्सुराणां विजयाभ्युपाये तवैव नामास्त्रगतिः कृती त्वम् ।
अप्यप्रसिद्धं यशसे हि पुंसामनन्यसाधारणमेव कर्म[2] ॥१९॥
सुराः समभ्यर्थयितार एते कार्यं त्रयाणामपि विष्टपानाम् ।
चापेन ते कर्म न चातिहिंस्रमहो बतासि स्पृहणीयवीर्यः ॥२०॥
मधुश्च ते मन्मथ साहचर्यादसावनुक्तोऽपि सहाय एव ।
समीरणो नोदयिता भवेति व्यादिश्यते केन हुताशनस्य ॥२१॥
तथेति शेषामिव[3] भर्तुराज्ञामादाय मूर्ध्ना मदनः प्रतस्थे ।
ऐरावतास्फालनकर्कशेन हस्तेन पस्पर्श तदङ्गमिन्द्रः ॥२२॥
स माधवेनाभिमतेन सख्या रत्या च साशङ्कमनुप्रयातः ।
अङ्गव्ययप्रार्थितकार्यसिद्धिः स्थाण्वाश्रमं हैमवतं जगाम ॥२३॥
तस्मिन्वने संयमिनां मुनीनां तपः[4] समाधेः प्रतिकूलवर्ती ।
संकल्पयोनेरभिमानभूतमात्मानमाधाय[5] मधुर्जजृम्भे[6] ॥२४॥

(वसन्तवर्णनम्)

कुबेरगुप्तां[7] दिशमुष्णरश्मौ गन्तुं प्रवृत्ते समयं विलङ्घ्य ।
दिग्दक्षिणा गन्धवहं मुखेन व्यलीकनिश्वासमिवोत्ससर्ज ॥२५॥
असूत सद्यः कुसुमान्यशोकः स्कन्धात्प्रभृत्येव सपल्लवानि ।
पादेन नापैक्षत सुन्दरीणां संपर्कमाशिञ्जितनूपुरेण ॥२६॥
सद्यः[8] प्रवालोद्गमचारुपत्रे नीते समाप्तिं नवचूतबाणे ।
निवेशयामास मधुर्द्विरेफान्नामाक्षराणीव मनोभवस्य ॥२७॥
वर्णप्रकर्षे सति कर्णिकारं दुनोति निर्गन्धतया स्म चेतः ।
प्रायेण सामग्र्यविधौ गुणानां पराङ्मुखी विश्वसृजः प्रवृत्तिः ॥२८॥

१. 'अस्मिन्' इति ना, अ० पाभे० ।

२. परमेश्वरचित्ताकर्षणलक्षणमिदन्तु कर्मान्यैर्दुष्करं सुप्रसिद्धं चेति भवानतिमहतो यशसो भाजनं भविष्यत्येवेति भावः । इति नारायणः ।

३. 'माला' इति अ-पाभे० । ४. 'तपःसमाधिप्रति' इति ना-पाभे० ।

५. 'मादाय' इति ना-पाभे० ।

६. मुनीनामित्यनेन मधोमुनिसामान्यसमाधिभेदनसामर्थ्यप्रतिपादनेन परमेश्वराकर्षविषयः प्रयासो निष्फल एवेति व्यज्यते । अन्यथा मुनिशब्दमपहाय तपःसमाधिप्रतिकूलवृत्तिरित्येवोच्येत । इति नारायणः ।

७. 'कुबेरनाथां' इति ना-पाभे० । ८. 'सख्युः' इति ना, अपाभे० ।

बालेन्दुवक्राण्यविकासभावाद्बभुः पलाशान्यतिलोहितानि ।
सद्यो वसन्तेन समागतानां नखक्षतानीव वनस्थलीनाम् ॥२९॥
लग्नद्विरेफाञ्जनभक्तिचित्रं[1] मुखे मधुश्रीस्तिलकं प्रकाश्य ।
रागेण बालारुणकोमलेन चूतप्रवालोष्ठमलञ्चकार ॥३०॥
मृगाः [2]प्रियालद्रुममञ्जरीणां रजः कणैर्विघ्नितदृष्टिपाताः ।
मदोद्धताः प्रत्यनिलं विचेरुर्वनस्थलीर्मर्मरपत्रमोक्षाः ॥३१॥
चूताङ्कुरास्वादकषायकण्ठः पुंस्कोकिलो यन्मधुरं चुकूज ।
मनस्विनीमानविघातदक्षं तदेव जातं वचनं स्मरस्य[3] ॥३२॥
हिमव्यपायाद्विशदाधराणामापाण्डुरीभूतमुखच्छवीनाम् ।
स्वेदोद्गमः किंपुरुषाङ्गनानां चक्रे पदं पत्रविशेषकेषु ॥३३॥
तपस्विनः स्थाणुवनौकसस्तामाकालिकीं वीक्ष्य मधुप्रवृत्तिम् ।
प्रयत्नसंस्तम्भितविक्रियाणां कथंचिदीशा मनसां बभूवुः ॥३४॥
तं देशमारोपितपुष्पचापे रतिद्वितीये मदने प्रपन्ने ।
काष्ठागतस्नेहरसानुविद्धं द्वन्द्वानि भावं क्रियया विवव्रुः ॥३५॥
मधु द्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्तमानः ।
शृङ्गेण च स्पर्शनिमीलिताक्षीं मृगीमकण्डूयत कृष्णसारः ॥३६॥
ददौ [4]रसात्पङ्कजरेणुगन्धि गजाय गण्डूषजलं करेणुः ।
अर्धोपभुक्तेन बिसेन जायां संभावयामास रथाङ्गनामा ॥३७॥
गीतान्तरेषु श्रमवारिलेशैः किंचित्समुच्छ्वासितपत्रलेखम् ।
पुष्पासवाघूर्णितनेत्रशोभि[5] प्रियामुखं किंपुरुषश्चुचुम्बे[6] ॥३८॥
पर्याप्तपुष्पस्तवकस्तनाभ्यः स्फुरत्प्रवालोष्ठमनोहराभ्यः ।
लतावधूभ्यस्तरवोऽप्यवापुर्विनम्रशाखाभुजबन्धनानि ॥३९॥

(योगेश्वरहरवर्णनम्)

श्रुताप्सरोगीतिरपि क्षणेऽस्मिन्हरः प्रसंख्यानपरो बभूव ।
आत्मेश्वराणां न हि जातु विघ्नाः समाधिभेदप्रभवो भवन्ति ॥४०॥

१. '-चित्रे' इति ना, अ-पाभे० । २. 'पियाल-' इति पाभे० ।
३. अनेन चूताङ्कुरास्वादनस्य गलान्तरोद्भूतदोषनिरासकत्वमुक्तम् ॥" ना० । 'तावदेव हि मानः स्याद् यावद्रौति न कोकिलः' इति भ० । ४. 'सरःप-' इति ना० अ०-पाभे० ।
५. '-शोभं' इति भ०-पाभे० । ६. 'चुचुम्ब' इति ना-पाभे० ।

लतागृहद्वारगतोऽथ[1] नन्दी वामप्रकोष्ठार्पितहेमवेत्रः[2] ।
मुखार्पितैकाङ्गुलिसंज्ञयैव मा चापलायेति गणान्व्यनैषीत्[3] ॥४१॥
निष्कम्पवृक्षं निभृतद्विरेफं मूकाण्डजं शान्तमृगप्रचारम् ।
तच्छासनात्काननमेव सर्वं चित्रार्पितारम्भमिवावतस्थे[4] ॥४२॥

( हरध्याने कामः )

दृष्टिप्रपातं[5] परिहृत्य तस्य कामः पुरः शुक्रमिव प्रयाणे ।
प्रान्तेषु संसक्तनमेरुशाखं ध्यानास्पदं भूतपतेर्विवेश ॥४३॥
स देवदारुद्रुमवेदिकायां शार्दूलचर्मव्यवधानवत्याम् ।
आसीनमासन्नशरीरपातस्त्रियम्बकं[6] संयमिनं ददर्श ॥४४॥

( हरध्यानमग्नता )

पर्यङ्कबन्धस्थिरपूर्वकायमृज्वायतं सन्नमितोभयांसम् ।
उत्तानपाणिद्वयसन्निवेशात्प्रफुल्लराजीवमिवाङ्कमध्ये ॥४५॥
भुजंगमोन्नद्धजटाकलापं[7] कर्णावसक्तद्विगुणाक्षसूत्रम् ।
कण्ठप्रभासङ्ग[8]विशेषनीलां कृष्णत्वचं[9] ग्रन्थिमतीं दधानम् ॥४६॥
किंचित्प्रकाशस्तिमितोग्रतारैर्भ्रूविक्रियायां विरतप्रसङ्गैः ।
नेत्रैरविस्पन्दितपक्ष्ममालैर्लक्ष्यीकृतघ्राणमधोमयूखैः ॥४७॥
अवृष्टिसंरम्भमिवाम्बुवाहमपामिवाधारमनुत्तरङ्गम् ।
अन्तश्चराणां मरुतां निरोधान्निवात[10]निष्कम्पमिव प्रदीपम् ॥४८॥
कपालनेत्रान्तरलब्धमार्गैर्ज्योतिःप्ररोहैरुदितैः शिरस्तः ।
मृणालसूत्राधिकसौकुमार्यां बालस्य लक्ष्मीं[11] ग्लपयन्तमिन्दोः ॥४९॥
मनो[12] नवद्वारनिषिद्धवृत्ति हृदि व्यवस्थाप्य समाधिवश्यम् ।
यमक्षरं क्षेत्रविदो[13] विदुस्तमात्मानमात्मन्यवलोकयन्तम् ॥५०॥
स्मरस्तथाभूतमयुग्मनेत्रं पश्यन्नदूरान्मनसाऽप्यधृष्यम् ।
नालक्षयत्साध्वससन्नहस्तः स्रस्तं शरं चापमपि स्वहस्तात् ॥५१॥

१. '-गृहद्वारि' इति अ-पाभे० । २. '-दण्डः' इति अ-पाभे०' । ३. 'न्यषेधीत्' इति अ-पाभे० ।
४. तु० सस्थ० शाकुन्तलम् । ५. 'प्रदीपं' इति ना-पाभे०, 'प्रतीपं' इति अ-पाभे० ।
६. '-स्तं त्र्यम्बकं' इति अ-पाभे० । ७. 'भुजङ्गमाबद्ध' इति ना-पाभे० ।
८. '-भ्यङ्ग-' इति ना-पाभे० । ९. 'मृगत्वचं' इति ना-अ-पाभे० ।
१०. '-न्निर्वात-' इति अ-पाभे० ११. 'रश्मीन्' इति ना-पाभे० ।
१२. 'नवहारि' इति ना, अ पाभे० । १३. 'वेदविदो' इति अ-पाभे० ।

( हरध्याने पार्वती )

निर्वाणभूयिष्ठमथास्य वीर्यं संधुक्षयन्तीव वपुर्गुणेन ।
अनुप्रयाता वनदेवताभ्यामदृश्यत स्थावरराजकन्या ॥५२॥
अशोकनिर्भर्त्सितपद्मरागमा[1]कृष्टहेमद्युतिकर्णिकारम् ।
मुक्ताकलापीकृतसिन्धुवारं वसन्तपुष्पाभरणं वहन्ती ॥५३॥
आवर्जिता किंचिदिव स्तनाभ्यां वासो वसाना तरुणार्करागम् ।
[2]पर्याप्तपुष्पस्तवकावनम्रा संचारिणी [3]पल्लविनी लतेव ॥५४॥
स्रस्तां[4] नितम्बादवलम्बमाना[5] पुनः पुनः केसरदामकाञ्चीम् ।
न्यासीकृतां स्थानविदा स्मरेण मौर्वीं द्वितीयामिव कार्मुकस्य ॥५५॥

( स्मरोपक्रमत्वम् )

सुगन्धिनिश्वासविवृद्धतृष्णं बिम्बाधरासन्नचरं द्विरेफम् ।
प्रतिक्षणं संभ्रमलोलदृष्टिर्लीलारविन्देन निवारयन्ती ॥५६॥
तां वीक्ष्य सर्वावयवानवद्यां रतेरपि[6]ह्रीपदमादधानाम् ।
जितेन्द्रिये शूलिनि पुष्पचापः स्वकार्यसिद्धिं पुनराशशंसे ॥५७॥
भविष्यतः पत्युरुमा च शंभोः समाससाद प्रतिहारभूमिम् ।
योगात्स चान्तःपुरमात्मसंज्ञं दृष्ट्वा परं ज्योतिरुपारराम ॥५८॥
ततो भुजङ्गाधिपतेः फणाग्रैरधः कथंचिद्धृतभूमिभागः ।
शनैः कृतप्राणविमुक्तिरीशः पर्यङ्कबन्धं निबिडं बिभेद ॥५९॥
तस्मै शशंस प्रणिपत्य नन्दी शुश्रूषया शैलसुतामुपेताम् ।
प्रवेशयामास च भर्तुरेनां भ्रूक्षेपमात्रानुमतप्रवेशाम् ॥६०॥
तस्याः सखीभ्यां प्रणिपातपूर्वं[8] स्वहस्तलूनः शिशिरात्ययस्य ।
व्यकीर्यत त्र्यम्बकपादमूले पुष्पोच्चयः पल्लवभङ्गभिन्नः ॥६१॥
उमापि नीलालकमध्यशोभि विस्रंसयन्ती नवकर्णिकारम् ।
चकार कर्णच्युतपल्लवेन मूर्ध्ना प्रणामं वृषभध्वजाय ॥६२॥

१. '-कृष्ट' इति ना-पाभे० । २. 'सुजात-' इति ना-पाभे० 'सञ्जात-' इति अ-पाभे० ।
३. 'पल्लविता' इति ना-पाभे० । ४. 'स्रस्तान्नि-' इति अ-पाभे० ।
५. '-दवरोपयन्ती' इति अ-पाभे० । ६. 'ह्रीतिसिवाऽऽद-' इति न-पाभे० ।
७. 'पुष्प-केतुः' इति ना, व-पाभे० । ८. 'प्रणिपत्य पू-' इति ना, अ- पाभे० ।

अनन्यभाजं पतिमाप्नुहीति सा तथ्यमेवाभिहिता[1] भवेन ।
न हीश्वरव्याहृतयः कदाचित्पुष्णन्ति लोके[2] विपरीतमर्थम् ॥६३॥
कामस्तु बाणावसरं प्रतीक्ष्य पतङ्गवद्वह्निमुखं विविक्षुः ।
उमासमक्षं हरबद्धलक्ष्यः[3] शरासनज्यां मुहुराममर्श ॥६४॥
अथोपनिन्ये गिरिशाय गौरी तपस्विने ताम्ररुचा करेण ।
विशोषितां भानुमतो मयूखैर्मन्दाकिनीपुष्करबीजमालाम् ॥६५॥
प्रतिग्रहीतुं प्रणयिप्रियत्वात् त्रिलोचनस्तामुपचक्रमे च ।
सम्मोहनं नाम च पुष्पधन्वा धनुष्यमोघं समधत्त बाणम् ॥६६॥
हरस्तु किञ्चित्परि[4]लुप्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥६७॥
विवृण्वती शैलसुताऽपि भावमङ्गैः [5]स्फुरद्बालकदम्बकल्पैः ।
साचीकृता[6] चारुतरेण तस्थौ मुखेन पर्यस्तविलोचनेन ॥६८॥
अथेन्द्रियक्षोभमयुग्मनेत्रः पुनर्वशित्वाद्बलवन्निगृह्य ।
हेतुं स्वचेतोविकृतेर्दिदृक्षुर्दिशामुपान्तेषु ससर्ज दृष्टिम् ॥६९॥
स दक्षिणापाङ्गनिविष्टमुष्टिं नतांसमाकुञ्चितसव्यपादम् ।
ददर्श चक्रीकृतचारुचापं प्रहर्तुमभ्युद्यतमात्मयोनिम् ॥७०॥
तपःपरामर्शविवृद्धमन्योर्भ्रूभङ्गदुष्प्रेक्ष्यमुखस्य तस्य ।
स्फुरन्नुदर्चिः सहसा तृतीयादक्ष्णः कृशानुः किल निष्पपात ॥७१॥
क्रोधं[7] प्रभो संहर संहरेति यावद् गिरः खे मरुतां चरन्ति ।
तावत् स वह्निर्भवनेत्रजन्मा भस्मावशेषं मदनं चकार ॥७२॥
तीव्राभिषङ्गप्रभवेण वृत्तिं मोहेन संस्तम्भयतेन्द्रियाणाम् ।
अज्ञातभर्तृव्यसने मुहूर्तं कृतोपकारेव रतिर्बभूव ॥७३॥
तमाशु विघ्नं तपसस्तपस्वी वनस्पतिं वज्र इवावभज्य[8] ।
स्त्रीसन्निकर्षं परिहर्तुमिच्छन्नन्तर्दधे भूतपतिः सभूतः ॥७४॥

१. 'भव्य-' इति ना, अ-पाभे० । २. 'पाके' इति व-पाभे० । ३. लक्षः इति ना-पाभे० ।
४. '-वृत्त-' इति ना, अ-पाभे० । ५. 'कुचद्वाल-' इति ना, व-पाभे० ।
६. 'साचीक्रिया' इति ना, अ, व पाभे० । ७. 'कोष' इति ना-पाभे० ।
८. '-रुज्य' इति ना, अ पाभे० ।

शैलात्मजाऽपि पितुरुच्छिरसोऽभिलाषं
व्यर्थं समर्थ्य[1] ललितं वपुरात्मनश्च ।
सख्योः समक्षमिति चाधिकजातलज्जा
शून्या जगाम भवनाभिमुखी कथञ्चित् ॥७५॥
सपदि मुकुलिताक्षीं रुद्रसंरम्भभीत्या
दुहितरमनुकम्प्यामद्रिरादाय दोर्भ्याम् ।
सुरगज इव बिभ्रत् पद्मिनीं दन्तलग्नां
प्रतिपथगतिरासीद् वेगदीर्घीकृताङ्गः[2] ॥७६॥

इति श्रीकालिदासकृते कुमारसम्भवे महाकाव्ये मदनदहनो नाम तृतीयः सर्गः ।

१. 'समीक्ष्य' इति ना-पाभे० ।
२. '-भः' इति ना, भ्र-पाठः ।

# चतुर्थः सर्गः

( रतिवैधव्यम् )

अथ मोहपरायणा सती विवशा कामवधूर्विबोधिता ।
विधिना प्रतिपादयिष्यता नववैधव्यमसह्यवेदनम् ॥१॥
अवधानपरे चकार सा प्रलयान्तोन्मिषिते विलोचने ।
न विवेद तयोरतृप्तयोः प्रियमत्यन्तविलुप्तदर्शनम् ॥२॥

(रतिविलापः[1])

अयि जीवितनाथजीवसीत्यभिधायोत्थितया तया पुरः ।
ददृशे पुरुषाकृति[2] क्षितौ हरकोपानलभस्म केवलम् ॥३॥
अथ सा पुनरेव विह्वला वसुधालिङ्गनधूसरस्तनी ।
विललाप विकीर्णमूर्धजा समदुःखामिव कुर्वती स्थलीम् ॥४॥
उपमानमभूद्विलासिनां करणं यत् तव कान्तिमत्तया ।
तदिदं गतमीदृशीं दशां न[3] विदीर्ये कठिनाः खलु स्त्रियः ॥५॥
क्व नु मां त्वदधीनजीवितां विनिकीर्य क्षणभिन्नसौहृदः ।
नलिनीं क्षतसेतुबन्धनो जलसङ्घात इवासि विद्रुतः ॥६॥
कृतवानसि विप्रियं न मे प्रतिकूलं न च ते मया कृतम् ।
किमकारणमेव दर्शनं विलपन्त्यै रतये न दीयते ॥७॥
स्मरसि स्मर मेखलागुणैरुत गोत्रस्खलितेषु बन्धनम् ।
च्युतकेशरदूषितेक्षणान्यवतंसोत्पलताडनानि वा ॥८॥
हृदये वससीति मत्प्रियं यदवोचस्तदवैमि कैतवम् ।
उपचारपदं न चेदिदं त्वमनङ्गः कथमक्षता रतिः ॥९॥
परलोकनवप्रवासिनः प्रतिपत्स्ये पदवीमहं तव ।
विधिना जन एष वञ्चितस्त्वदधीनं खलु देहिनां सुखम् ॥१०॥

१. तु० सस्थ० रामायणे ताराविलापः [४, २३] मन्दोदरी विलापः [६, ११४]
२. '-तिः' इति ना-पाभे० । ३. 'च दीर्ये' इति ना-पाभे० ।

रजनीतिमिरावगुण्ठिते पुरमार्गे घनशब्दविक्लवाः ।
वसतिं प्रियकामिनां प्रियास्त्वदृते प्रापयितुं क ईश्वरः ॥११॥
नयनान्यरुणानि घूर्णयन् वचनानि स्खलयन् पदे पदे ।
असति त्वयि वारुणीमदः प्रमदानामधुना विडम्बना ॥१२॥
अवगम्य कथीकृतं वपुः प्रियबन्धोस्तव निष्फलोदयः ।
बहुलेऽपि गते निशाकरस्तनुतां दुःखमनङ्ग मोक्ष्यति ॥१३॥
हरितारुणचारु [1]बन्धनः कलपुंस्कोकिलशब्दसूचितः ।
वद सम्प्रति कस्य बाणतां नवचूतप्रसवो गमिष्यति ॥१४॥
अलिपङ्क्तिरनेकशस्त्वया गुणकृत्ये धनुषो नियोजिता ।
विरुतैः करुणा [2]स्वनैरियं गुरुशोकामनुरोदितीव माम् ॥१५॥
प्रतिपद्य मनोहरं वपुः पुनरप्यादिश तावदुत्थितः ।
रतिदूतिपदेषु कोकिलां[3] मधुरालापनिसर्गपण्डिताम्[4] ॥१६॥
शिरसा प्रणिपत्य याचितान्युपगूढानि सवेपथूनि च ।
सुरतानि च तानि ते रहः स्मर संस्मृत्य न शान्तिरस्ति मे ॥१७॥
रचितं रतिपण्डित त्वया स्वयमङ्गेषु[5] ममेदमार्तवम् ।
ध्रियते कुसुमप्रसाधनं तव तच्चारु वपुर्न दृश्यते ॥१८॥
विबुधै रसि[6] यस्य[7] दारुणैरसमाप्ते परिकर्मणि स्मृतः ।
तमिमं[8] कुरु दक्षिणेतरं चरणं निर्मितरागमेहि[9] मे ॥१९॥
अहमेत्य पतङ्गवर्त्मना पुनरङ्का [10]श्रयणी भवामि ते ।
चतुरैः सुरकामिनीजनैः प्रिय यावन्न विलोभ्यसे[11] दिवि ॥२०॥
मदनेन विनाकृता रतिः क्षणमात्रं किल जीवितेति[12] मे ।
वचनीयमिदं व्यवस्थितं रमण त्वामनुयामि यद्यपि ॥२१॥
क्रियतां कथमन्त्यमण्डनं परलोकान्तरितस्य ते मया ।
सममेव गतोऽस्यतर्कितां गतिमङ्गेन च जीवितेन च ॥२२॥

१. '-पल्लवः' इति अ-पाभे० ।
२. '-स्वरै-' इति ना-पाभे० ।
३. '-लान्' इति ना, अ-पाभे० ।
४. '-तान्' इति ना, अ-पाभे० ।
५. 'नवम-' इति ना-पाभे० ।
६. '-रपि' इति ना, अ-पाभे० ।
७. 'यत् सु-' इति ना, अ पाभे० ।
८. 'तदि-' इति ना-पाभे० ।
९. '-त्य' इति ता-पाभे० ।
१०. '-श्रयि-' इति ना-पाभे० ।
११. 'विलुप्यसे' इति अ-पाभे० ।
१२. 'जीवतीति' इति ना, अ-पाभे० ।

ऋजुतां नयतः स्मरामि ते शरमुत्सङ्ग[1]निषण्णधन्वनः ।
मधुना सह सस्मितां कथां नयनोपान्तविलोकितं च यत् ॥२३॥
क्व नु ते हृदयङ्गमः सखा कुसुमायोजितकार्मुको मधुः ।
न खलूग्ररुषा पिनाकिना गमितः सोऽपि सुहृद्गतां गतिम् ॥२४॥
अथ तैः परिदेविताक्षरैर्हृदये दिग्ध[2]शरैरिवाहतः[3] ।
रतिमभ्युपपत्तुमातुरां मधुरात्मानमदर्शयत्पुरः ॥२५॥
तमवेक्ष्य रुरोद सा भृशं स्तनसंबाधमुरो जघान च ।
स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते ॥२६॥
इति चैनमुवाच दुःखिता सुहृदः पश्य वसन्त किं स्थितम् ? ।
तदिदं[4] कणशो विकीर्यते पवनैर्भस्म कपोतकर्बुरम् ॥२७॥
अयि संप्रति देहि दर्शनं स्मर पर्युत्सुक एष माधवः ।
दयितास्वनवस्थितं नृणां न खलु प्रेम चलं सुहृज्जने ॥२८॥
अमुना ननु पार्श्ववर्तिना जगदाज्ञां ससुरासुरं तव ।
बिसतन्तुगुणस्य कारितं धनुषः पेलवपुष्पपत्रिणः ॥२९॥
गत एव न ते निवर्तते स सखा दीप इवानिलाहतः ।
अहमस्य दशेव पश्य मामविषह्यव्यसनेन धूमिताम्[6] ॥३०॥
विधिनाकृतमर्धवैशसं ननु मां कामवधे विमुञ्चता ।
अनपायिनि संश्रयद्रुमे गजभग्ने पतनाय वल्लरी ॥३१॥
तदिदं क्रियतामनन्तरं भवता बन्धुजनप्रयोजनम् ।
विधुरां ज्वलनातिसर्जना[7]न्ननु मां प्रापय पत्युरन्तिकम् ॥३२॥
शशिना सह याति कौमुदी सह मेघेन तडित्प्रलीयते ।
प्रमदाः पतिवर्त्मगा इति प्रतिपन्नं हि विचेतनैरपि ॥३३॥
अमुनैव कषायितस्तनी सुभगेन प्रियगात्रभस्मना ।
नवपल्लवसंस्तरे यथा रचयिष्यामि तनुं विभावसौ ॥३४॥
कुसुमास्तरणे सहायतां बहुशः सौम्य गतस्त्वमावयोः ।

१. '-निषक्त-' इति अ-पाभे० ।
२. '-फलैरिवार्पितः' इति ना-पाभे० ।
३. '-वार्दितः' इति अ-पाभे० ।
४. 'सुहृदं' इति ना-पाभे० ।
५. 'य इ-' इति अ-पाभे० ।
६. '-व्यसनप्रधूपिताम्' इति ना-पाभे० ।
७. '-दनु' इति ना-पाभे० ।

कुरु सम्प्रति तावदाशु मे[1] प्रणिपाताञ्जलियाचितश्चिताम्[2] ॥३५॥
तदनु ज्वलनं मदर्पितं त्वरयेर्दक्षिणवातवीजनैः ।
विदितं खलु ते यथा स्मरः क्षणमप्युत्सहते न मां विना[3] ॥३६॥
इति चापि विधाय दीयतां सलिलस्याञ्जलिरेक एव नौ ।
अविभज्य परत्र तं मया सहितः पास्यति ते सबान्धवः ॥३७॥
परलोकविधौ च माधव स्मरमुद्दिश्य विलोलपल्लवाः ।
निवपेः सहकारमञ्जरीः प्रियचूतप्रसवो हि ते सखा ॥३८॥

( सञ्जीवनाश्वासः )

इति देहविमुक्तये स्थितां[4] रतिमाकाशभवा सरस्वती ।
शफरीं ह्रदशोषविक्लवां प्रथमा वृष्टिरिवान्वकम्पयत् ॥३९॥
कुसुमायुधपत्नि दुर्लभस्तव भर्ता न चिराद्भविष्यति ।
शृणु येन स कर्मणा गतः शलभत्वं हरलोचनार्चिषि ॥४०॥
अभिलाषमुदीरितेन्द्रियः स्वसुतायामकरोत्प्रजापतिः ।
अथ तेन निगृह्य विक्रियामभिशप्तः फलमेतदन्वभूत् ॥४१॥
परिणेष्यति पार्वतीं यदा तपसा तत्प्रवणीकृतो हरः ।
उपलब्धसुखस्तदा स्मरं वपुषा स्वेन नियोजयिष्यति[6] ॥४२॥
इति चाह स धर्मयाचितः स्मरशापावधिदां सरस्वतीम् ।
अशनेरमृतस्य चोभयोर्वशिनश्चाम्बुधराश्च योनयः ॥४३॥
तदिदं परिरक्ष शोभने भवितव्यप्रियसंगमं वपुः ।
रविपीतजलातपात्यये पुनरोघेन हि युज्यते नदी ॥४४॥
इत्थं रतेः किमपि भूतमदृश्यरूपं मन्दीचकार मरणव्यवसायबुद्धिम् ।
तत्प्रत्ययाच्च कुसुमायुधबन्धुरेनामाश्वासयत्सुचरितार्थपदैर्वचोभिः ॥४५॥
अथ मदनवधूरुपप्लवान्तं व्यसनकृशा परिपालयाम्बभूव ।
शशिन इव दिवातनस्य लेखा किरणपरिक्षयधूसरा प्रदोषम् ॥४६॥

**इति श्रीकालिदासकृते कुमारसम्भवे महाकाव्ये रतिविलापो नाम चतुर्थः सर्गः ।**

१. 'धिनिपा- इति ना-पाभे० ।
२. 'तां चिताम्' इति ना, श्र-पाभे० ।
३. 'मद्' इति ना-पाभे० ।
४. 'यन्मया' इति ना-पाभे० ।
५. 'स्थिरां' इति ना-पाभे० ।
६. 'समर्थयिष्यति' इति ना, श्र-पाभे० ।

# पञ्चमः सर्गः

( पार्वतीव्रतनिश्चयः )

तथा समक्षं दहता मनोभवं पिनाकिना भग्नमनोरथा सती ।
निनिन्द रूपं हृदयेन पार्वती प्रियेषु सौभाग्यफला हि चारुता ॥१॥
इयेष सा कर्तुमवन्ध्यरूपतां[1] समाधिमास्थाय तपोभिरात्मनः ।
अवाप्यते[2] वा कथमन्यथा द्वयं तथाविधं प्रेमपतिश्च तादृशः ॥२॥
निशम्य चैनां तपसे कृतोद्यमां सुतां[3] गिरीशप्रतिसक्तमानसाम् ।
उवाच मेना परिरभ्य वक्षसा निवारयन्ती महतो मुनिव्रतात् ॥३॥
मनीषिताः सन्ति गृहेषु[4] देवतास्तपः क्व वत्से क्व च तावकं वपुः ।
पदं सहेत भ्रमरस्य पेलवं शिरीषपुष्पं न पुनः पतत्रिणः ॥४॥
इति[6] ध्रुवेच्छामनुशासती सुतां शशाक मेना न नियन्तुमुद्यमात् ।
क ईप्सितार्थस्थिरनिश्चयं मनः पयश्च निम्नाभिमुखं प्रतीपयेत ॥५॥
कदाचिदासन्नसखीमुखेन सा मनोरथज्ञं पितरं मनस्विनी ।
अयाचतारण्यनिवासमात्मनः फलोदयान्ताय तपःसमाधये ॥६॥
अथानुरूपाभिनिवेशतोषिणा कृताभ्यनुज्ञा गुरुणा गरीयसा ।
प्रजासु पश्चात्प्रथितं तदाख्यया जगाम गौरीशिखरं शिखण्डिमत् ॥७॥
विमुच्य सा हारमहार्यनिश्चया विलोलयष्टिप्रविलुप्तचन्दनम् ।
बबन्ध बालारुणबभ्रु वल्कलं पयोधरोत्सेधविशीर्णसंहति ॥८॥
यथा प्रसिद्धैर्मधुरं शिरोरुहैर्जटाभिरप्येवमभूत्तदाननम् ।

१. '-कामतां' इति ना-पाभे० ।  २. 'तत्' इति ना-पाभे० ।
३. 'गिरीश प्रति' इति ना, अ-पाभे० ।
४. 'मनीषितामर्चं' अ-पाठः 'मनोषितायार्चं ना-पाभे० ।
५. 'देवतां' अ-पाभे० ।  ६. 'स्थिरेच्छा-' इति ना-पाभे० ।
७. '-दृष्टिः' इति अ-पाभे० ।

न षट्पदश्रेणिभिरेव पङ्कजं सशैवलासङ्गमपि प्रकाशते ॥९॥
प्रतिक्षणं सा कृतरोमविक्रियां व्रताय मौञ्जीं[1] त्रिगुणां बभार याम् ।
अकारि तत्पूर्वनिबद्धया तया सरागमस्या रसनागुणास्पदम् ॥१०॥
विसृष्टरागादधरान्निवर्तितः[2] स्तनाङ्गरागारुणिताच्च कन्दुकात् ।
कुशाङ्कुरादानपरिक्षताङ्गुलिः कृतोऽक्षसूत्रप्रणयी तया करः ॥११॥
महार्हशय्यापरिवर्तनच्युतैः स्वकेशपुष्पैरपि या स्म दूयते ।
अशेत सा बाहुलतोपधायिनी निषेदुषी स्थण्डिल एव केवले ॥१२॥
पुनर्ग्रहीतुं नियमस्थया तया द्वयेऽपि निक्षेप इवार्पितं द्वयम् ।
लतासु तन्वीषु विलासचेष्टितं विलोलदृष्टं[3] हरिणाङ्गनासु च ॥१३॥
अतन्द्रिता सा स्वयमेव वृक्षकान्घटस्तनप्रस्रवणैर्व्यवर्धयत् ।
गुहोऽपि येषां प्रथमाप्तजन्मनां न पुत्रवात्सल्यमपाकरिष्यति ॥१४॥
अरण्यबीजाञ्जलिदानलालितास्तथा च तस्यां हरिणा विशश्वसुः ।
यथा तदीयैर्नयनैः कुतूहलात्पुरः सखीनाममिमीत लोचने ॥१५॥
कृताभिषेकां हुतजातवेदसं त्वगुत्तरासङ्गवतीमधीतिनीम् ।
दिदृक्षवस्तामृषयोऽभ्युपागमन्न धर्मवृद्धेषु वयः समीक्ष्यते ॥१६॥
विरोधिसत्त्वोज्झितपूर्वमत्सरं द्रुमैरभीष्टप्रसवार्चितातिथि ।
नवोटजाभ्यन्तरसंभृतानलं तपोवनं तच्च बभूव पावनम् ॥१७॥
यदा फलं पूर्वतपःसमाधिना न तावता लभ्यममंस्त काङ्क्षितम् ।
तदानपेक्ष्य स्वशरीरमार्दवं तपो महत्सा चरितुं प्रचक्रमे ॥१८॥
क्लमं ययौ कन्दुकलीलयापि या तया मुनीनां चरितं व्यगाह्यत ।
ध्रुवं वपुः काञ्चनपद्मनिर्मितं मृदु प्रकृत्या च ससारमेव च ॥१९॥

( शुचिव्रतत्वम् )

शुचौ चतुर्णां ज्वलतां हविर्भुजां शुचिस्मिता मध्यगता सुमध्यमा ।
विजित्य नेत्रप्रतिघातिनीं प्रभामनन्यदृष्टिः सवितारमैक्षत ॥२०॥
तथातितप्तं सवितुर्गभस्तिभिर्मुखं तदीयं कमलश्रियं दधौ ।
अपाङ्गयोः केवलमस्य दीर्घयोः शनैः शनैः श्यामिकया कृतं पदम् ॥२१॥

१. 'द्विगुणां' इति अ-पाभे० ।　२. 'निसृष्ट' इति षा-पाभे० ।
३. '-दृष्टिः' इति पाभे० ।　४. सर्वसमासमाधि-' इति ना-पाभे० ।

अयाचितोपस्थितमम्बु केवलं रसात्मकस्योडुपतेश्च रश्मयः ।
बभूव तस्याः[1] किल पारणाविधिर्न वृक्षवृत्तिव्यतिरिक्तसाधनः[2] ॥२२॥

( प्रावृड्व्रतानुष्ठानम् )

निकामतप्ता [3]विविधेन वह्निना नभश्चरेणेन्धनसंभृतेन सा ।
तपात्यये वारिभिरुक्षिता नवैर्भुवा सहोष्माणममुञ्चदूर्ध्वगम् ॥२३॥
स्थिताः क्षणं पक्ष्मसु ताडिताधराः [4]पयोधरोत्सेधनिपातचूर्णिताः ।
वलीषु तस्याः स्खलिताः प्रपेदिरे [5]चिरेण नाभिं प्रथमोदबिन्दवः ॥२४॥
शिलाशयां तामनिकेतवासिनीं निरन्तरास्वन्तरवातवृष्टिषु ।
व्यलोकयन्नुन्मिषितैस्तडिन्मयैर्महातपः साक्ष्य इव स्थिताः क्षपाः ॥२५॥

( हेमन्तव्रतानुष्ठानम् )

निनाय सात्यन्तहिमोत्किरानिलाः सहस्यरात्रीरुदवासतत्परा ।
परस्पराक्रन्दिनि चक्रवाकयोः पुरो वियुक्ते मिथुने कृपावती ॥२६॥
मुखेन सा पद्मसुगन्धिना निशि प्रवेपमानाधरपत्रशोभिना ।
तुषारवृष्टिक्षतपद्मसंपदां [6]सरोजसन्धानमिवाकरोदपाम् ॥२७॥
स्वयं विशीर्णद्रुमपर्णवृत्तिता परा हि काष्ठा तपसस्तया पुनः ।
तदप्यपाकीर्णमतः [7]प्रियंवदां वदन्त्यपर्णेति[8] च तां पुराविदः ॥२८॥
मृणालिकापेलवमेवमादिभिर्व्रतैः [9]स्वमङ्गं ग्लपयन्त्यहर्निशम् ।
तपः शरीरैः कठिनैरुपार्जितं तपस्विनां दूरमधश्चकार सा ॥२९॥

( ब्रह्मचारिप्रवेशः )

अथाजिनाषाढधरः प्रगल्भवाग्ज्वलन्निव ब्रह्ममयेन तेजसा ।
विवेश कश्चिज्जटिलस्तपोवनं शरीरबद्धः प्रथमाश्रमो यथा ॥३०॥
तमातिथेयी बहुमानपूर्वया सपर्यया प्रत्युदियाय पार्वती ।
भवन्ति साम्येऽपि[10] निविष्टचेतसां वपुर्विशेषेष्वतिगौरवाः क्रियाः ॥३१॥

१. खलु इति ना, श्र-पाभे० ।　२. साधनम् इति ना-पाभे० ।
३. हि- इति -ना, श्र-पाभे० ।　४. पयोधरोत्सङ्ग इति ना-पाभे० ।
५. क्रमेण इति श्र-पाभे० ।　६. -सन्तान- इति ना-पाभे० ।
७. प्रियंवदा इति ना-पाभे० ।　८. -पर्णामिति ताम् इति श्र-पाभे० ।
९. तदङ्गं इति ना-पाभे० ।　१०. साम्येऽभि इति ना-पाभे० ।

( जटिलजिज्ञासा )

विधिप्रयुक्तां[1] परिगृह्य सत्क्रियां परिश्रमं नाम विनीय च क्षणम् ।
उमां स पश्यन्नृजुनैव चक्षुषा प्रचक्रमे वक्तुमनुज्झितक्रमः ॥३२॥
अपि क्रियार्थं सुलभं समित्कुशं जलान्यपि स्नानविधिक्षमाणि ते ।
अपि[2] स्वशक्त्या तपसि प्रवर्तसे शरीरमाद्यं खलु धर्मसाधनम् ॥३३॥
अपि त्वदावर्जितवारिसंभृतं प्रवालमासामनुबन्धि वीरुधाम् ।
चिरोज्झितालक्तकपाटलेन ते तुलां यदारोहति दन्तवाससा ॥३४॥
अपि[3] प्रसन्नं हरिणेषु ते मनः करस्थदर्भप्रणयापहारिषु[4] ।
य [5]उत्पलाक्षि प्रचलैर्विलोचनैस्तवाक्षि[6]सादृश्यमिव प्रयुञ्जते ॥३५॥
यदुच्यते पार्वति पापवृत्तये न रूपमित्यव्यभिचारि तद्वचः ।
तथाहि ते शीलमुदारदर्शने तपस्विनामप्युपदेशतां गतम् ॥३६॥
विकीर्णसप्तर्षिबलि[7]प्रहासिभिस्तथा न गाङ्गैः सलिलैर्दिवश्च्युतैः ।
यथा त्वदीयैश्चरितैरनाविलैर्महीधरः पावित एष सान्वयः ॥३७॥
अनेन धर्मः सविशेषमद्य मे त्रिवर्गसारः प्रतिभाति भाविनि ।
त्वया मनोनिर्विषयार्थकामया यदेक एष प्रतिगृह्य सेव्यते ॥३८॥
प्रयुक्तसत्कारविशेषमात्मना न मां परं [8]संप्रतिपत्तुमर्हसि ।
[9]यतः सतां सन्नतगात्रि संगतं मनीषिभिः साप्तपदीनमुच्यते ॥३९॥
अतोऽत्र किंचिद्भवतीं बहुक्षमां द्विजातिभावादुपपन्नचापलः ।
अयं जनः प्रष्टुमनास्तपोधने न चेद्रहस्यं प्रतिवक्तुमर्हसि[10] ॥४०॥
कुले प्रसूतिः प्रथमस्य वेधसस्त्रिलोकसौन्दर्यमिवोदितं[11] वपुः ।
अमृग्यमैश्वर्यसुखं नवं वयस्तपः फलं स्यात्किमतः परं वद ॥४१॥
भवत्यनिष्टादपि नाम दुःसहान्मनस्विनीनां प्रतिपत्तिरीदृशी ।
विचारमार्गप्रहितेन चेतसा न दृश्यते तच्च [12]कृशोदरि त्वयि ॥४२॥

१. प्रतिगृह्य इति ना-पाभे० । २. अयि इति अ-पाभे० ।
३. अयि इति अ-पाभे० । ४. प्रणयाप राधिषु इति ना-पाभे० ।
५. उत्पलक्षेप च- इति न-पाभे० । ६. -सापत्न्य इति अ-पाभे० ।
७. प्रभा- इति ना अ-पाभे० । ८. सा प्र- इति ना-पाभे० ।
९. यदा इति ना-पाभे० । १०. -बोधयिष्यसि इति न-पाभे०, गोपयिष्यसि इति अ-पाभे० ।
११. -मिवार्जितं इति ना-पाभे० । १२. तलोदरि इति न-पाभे० ।

अलभ्यशोकाभिभवेयमाकृतिर्विमानना सुभ्रु[1] कुतः पितुर्गृहे ।
पराभिमर्शो न तवास्ति कः करं प्रसारयेत्पन्नगरत्नसूचये[2] ॥४३॥
किमित्यपास्याभरणानि यौवने धृतं त्वया वार्धकशोभि वल्कलम् ।
वद प्रदोषे स्फुटचन्द्रतारका[3] विभावरी यद्यरुणाय कल्पते ॥४४॥
दिवं यदि प्रार्थयसे वृथा श्रमः पितुः प्रदेशास्तव देवभूमयः ।
अथोपयन्तारमलं समाधिना न रत्नमन्विष्यति मृग्यते हि तत् ॥४५॥
निवेदितं निःश्वसितेन सोष्मणा मनस्तु मे संशयमेव गाहते ।
न दृश्यते प्रार्थयितव्य एव ते भविष्यति प्रार्थितदुर्लभः कथम् ॥४६॥
अहो स्थिरः कोऽपि तवेप्सितो युवा चिराय कर्णोत्पलशून्यतां गते ।
उपेक्षते यः श्लथ[4] लम्बिनीर्जटाः कपोलदेशे कलमाग्रपिङ्गलाः ॥४७॥
मुनिव्रतैस्त्वामतिमात्रकर्शितां दिवाकराप्लुष्टविभूषणास्पदाम् ।
शशाङ्कलेखामिव[5] पश्यतो दिवा सचेतसः कस्य मनो न दूयते ॥४८॥
अवैमि सौभाग्यमदेन वञ्चितं तव प्रियं यश्चतुरावलोकिनः ।
करोति लक्ष्यं[6] चिरमस्य चक्षुषो न वक्त्रमात्मीयमरालपक्ष्मणः ॥४९॥
कियच्चिरं श्राम्यसि गौरि विद्यते ममापि पूर्वाश्रमसंचितं तपः ।
तदर्धभागेन लभस्व काङ्क्षितं वरं तमिच्छामि च साधु वेदितुम् ॥५०॥
इति प्रविश्याभिहिता द्विजन्मना मनोगतं सा न शशाक शंसितुम् ।
अथो वयस्यां परिपार्श्ववर्तिनीं विवर्तितानञ्जननेत्रमैक्षत ॥५१॥

( सखीप्रतिवचनम् )

सखी तदीया तमुवाच वर्णिनं निबोध साधो तव चेत्कुतूहलम् ।
यदर्थमम्भोजमिवोष्णवारणं कृतं तपः साधनमेतया वपुः ॥५२॥

१. ऊङुतः (४, १, ६६) इति विहित ऊङ्प्रत्ययः क्वचिदूकारान्तादपि भवति । कुत इत्यत्राऽऽह—प्रवृत्तेरिति । आचार्यप्रवृत्तेरित्यर्थः । अत्र सुभ्रूशब्दाद् अप्राणिजातेरित्यादिना ऊङि सति 'अचि श्नुधातुभ्रुवाम्'—इत्यादिनोवङदिशस्याभावान्नदीसंज्ञाऽपि स्यात् । अस्य भ्रूशब्दसम्बन्ध्युवर्णत्वाभावात् । ततश्च 'अम्बार्थनद्योर्ह्रस्वः' इति ह्रस्वे सति एङ्ह्रस्वात् सम्बद्धेः (६, १, ६९) इति सुलोपः । ततश्च हे सुभ्रु ! इति पदं सिध्यति । ऊङि-त्वसति सुभ्रूरित्येव ।' ना० ।

२. -सूतये इति ना-पाभे० ।

३. विनिकीर्णतारका इति ना-पाभे० । विनिकीर्य- इति अ-पाभे० ।

४. -बन्धिनी इति ना-पाभे० ।

५. -रेखामिव इति ना-पाभे ।

६. दीर्यते इति ना-पाभे० ।

६. लक्षं इति ना-पाभे० ।

७. रविमस्य इति ना, अ-पाभे० ।

८. वर्तिनि-इति भ-पाभे० ।

इयं महेन्द्रप्रभृतीनधिश्रियश्चतुर्दिगीशानवमत्य [1]मानिनी ।
अरूपहार्यं मदनस्य निग्रहात्पिनाकपाणिं पतिमाप्तुमिच्छति ॥५३॥
असह्यहुंकारनिवर्तितः पुरा पुरारिमप्राप्तमुखः शिलीमुखः ।
इमां हृदि व्यायतपातमक्षिणोद्विशीर्णमूर्तेरपि पुष्पधन्वनः ॥५४॥
तदाप्रभृत्युन्मदना पितुर्गृहे ललाटिकाचन्दनधूसरालका ।
न जातु बाला लभते स्म निर्वृतिं तुषारसंघातशिलातलेष्वपि ॥५५॥
उपात्तवर्णे चरिते पिनाकिनः सवाष्पकण्ठस्खलितैः पदैरियम् ।
अनेकशः किन्नरराजकन्यका वनान्तसंगीतसखीररोदयत् ॥५६॥
त्रिभागशेषासु निशासु च क्षणं निमील्य नेत्रे सहसा व्यबुध्यत ।
क्व नीलकण्ठ व्रजसीत्यलक्ष्यवाग्[2] असत्यकण्ठार्पितबाहुबन्धना ॥५७॥
यदा बुधैः सर्वगतस्त्वमुच्यसे न वेत्सि भावस्थमिमं कथं जनम् ।
इति स्वहस्तोल्लिखितश्च मुग्धया रहस्युपालभ्यत चन्द्रशेखरः ॥५८॥
यदा च तस्याधिगमे जगत्पतेरपश्यदन्यं न विधिं विचिन्वती ।
तदा सहास्माभिरनुज्ञया गुरोरियं प्रपन्ना तपसे तपोवनम् ॥५९॥
द्रुमेषु सख्या कृतजन्मसु स्वयं फलं तपःसाक्षिषु[3] दृष्टमेष्वपि ।
न च प्ररोहाभिमुखोऽपि दृश्यते मनोरथोऽस्याःशशिमौलिसंश्रयः ॥६०॥
न वेद्मि स प्रार्थितदुर्लभः कदा सखीभि[4]रस्रोत्तरमीक्षितामिमाम् ।
तपःकृशामभ्युपपत्स्यते सखीं वृषेव सीतां तदवग्रहक्षताम् ॥६१॥
अगूढसद्भावमितीङ्गितज्ञया निवेदितो नैष्ठिकसुन्दरस्तया ।
अयीदमेवं परिहास इत्युमामपृच्छदव्यञ्जितहर्षलक्षणः ॥६२॥

(जटिलपार्वतीसंवादः)

अथाग्रहस्ते मुकुलीकृताङ्गुलौ समर्पयन्ती स्फटिकाक्षमालिकाम् ।
कथञ्चिदद्रेस्तनया मिताक्षरं चिरव्यवस्थापितवागभाषत ॥६३॥
यथा श्रुतं वेदविदां वर त्वया जनोऽयमुच्चैःपदलङ्घनोत्सुकः ।
तपः किलेदं तदवाप्तिसाधनं मनोरथानामगतिर्न विद्यते ॥६४॥

१. भामिनी इति ना-पाभे० । २. लक्षवाग् इति ना-पाभे० ।
३. बद्धमेष्वपि इति ना-पाभे० ।
४. रस्रान्तरवीक्षि- इति अ-पाभे० । -रास्रान्तरवीक्षिता- इति ना-पाभे० ।

अथाऽऽइ वर्णी विदितो महेश्वरस्तदर्थिनी त्वं [1]पुनरेव वर्तसे ।
अमङ्गलाभ्यासरतिं विचिन्त्य तं तवानुवृत्तिं न च कर्तुमुत्सहे ॥६५॥
अवस्तुनिर्बन्धपरे कथं नु ते करोऽयमामुक्तविवाहकौतुकः ।
करेण शम्भोर्वलयीकृताहिना सहिष्यते तत्प्रथमावलम्बनम् ॥६६॥
त्वमेव तावत् परिचिन्तय स्वयं[2] कदाचिदेते यदि योगमर्हतः ।
वधूदुकूलं कलहंसलक्षणं[3] गजाजिनं शोणितबिन्दुवर्षि च[4] ॥६७॥
चतुष्कपुष्पप्रकरावकीर्णयोः परोऽपि को नाम तवानुमन्यते[5] ।
अलक्तकाङ्कानि पदानि पादयोर्विकीर्णकेशासु परेतभूमिषु ॥६८॥
अयुक्तरूपं किमतः परं वद त्रिनेत्रवक्षः सुलभं तवापि यत् ।
स्तनद्वयेऽस्मिन् हरिचन्दनास्पदे पदं चिताभस्मरजः करिष्यति ॥६९॥
इयञ्च तेऽन्या पुरतो विडम्बना यदूढया वारणराजहार्यया[7] ।
विलोक्य वृद्धोक्षमधिष्ठितं त्वया महाजनः स्मेरमुखो भविष्यति ॥७०॥
द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया [8]पिनाकिनः ।
कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी ॥७१॥
वपुर्विरूपाक्षमलक्ष्यजन्मता दिगम्बरत्वेन निवेदितं वसु ।
वरेषु यद् बालमृगाक्षि मृग्यते तदस्ति किं व्यस्तमपि त्रिलोचने ॥७२॥
निवर्तयास्मादसदीप्सितान्मनः क्व तद्विधस्त्वं क्व च पुण्यलक्षणा ।
अपेक्ष्यते साधुजनेन वैदिकी श्मशानशूलस्य न यूपसत्क्रिया ॥७३॥

( जटिल भर्त्सनम् )

इति द्विजातौ प्रतिकूलवादिनि प्रवेपमानाधरलक्ष्यकोपया ।
[9]विकुञ्चित [9]भ्रूलतमाहिते[10] तया विलोचने तिर्यगुपान्तलोहिते ॥७४॥
उवाच चैनं परमार्थतो हरं न वेत्सि नूनं यत एवमात्थ माम् ।
अलोकसामान्यमचिन्त्यहेतुकं द्विषन्ति मन्दाश्चरितं महात्मनाम् ॥७५॥
विपत्प्रतीकारपरेण मङ्गलं निषेव्यते भूतिसमुत्सुकेन वा ।
जगच्छरण्यस्य निराशिषः सतः किमेभिराशोपहतात्मवृत्तिभिः ॥७६॥

१. पुर एव इति ना-पाभे० । २. स्वतः इति ना-पाभे० ।
३. क्व च हंस- इतिना-पाभे० । च सहंस-इतिअ-पाभे० । ४. क्व चाजि- इति ना-पाभे० ।
५. तव् इति न-पाभे० । ६. -मंस्यते इति ना, अ-पाभे० ।
७. -भार्यया इति ना-पाभे० । ८. कपालिनः इति अ-पाभे० ।
९. निकुञ्चित इति ना-पाभे० । १०. भ्रूलतया तया कृते इति अ-पाभे० ।

अकिञ्चनः सन् प्रभवः स सम्पदां त्रिलोकनाथः पितृसद्मगोचरः ।
स भीमरूपः शिव इत्युदीर्यते न सन्ति याथार्थ्यविदः पिनाकिनः ॥७७॥
विभूषणोद्भासि पिनद्धभोगि वा गजाजिनालम्बि दुकूलधारि वा ।
कपालि वा स्यादथवेन्दुशेखरं न विश्वमूर्तेरवधार्यते वपुः ॥७८॥
तदङ्गसंसर्गमवाप्य कल्पते ध्रुवं चिताभस्मरजो विशुद्धये ।
तथाहि नृत्याभिनयक्रियाच्युतं विलिप्यते मौलिभिरम्बरौकसाम् ॥७९॥
असम्पदस्तस्य वृषेण गच्छतः प्रभिन्नदिग्वारणवाहनो वृषा ।
करोति पादावुपगम्य मौलिना विनिद्रमन्दाररजोऽरुणाङ्गुली ॥८०॥
विवक्षता दोषमपि च्युतात्मना त्वयैकमीशं प्रति साधु भाषितम् ।
यमामनन्त्यात्मभुवोऽपि कारणं कथं स लक्ष्यप्रभवो भविष्यति ॥८१॥
अलं विवादेन यथा श्रुतस्त्वया तथाविधस्तावदशेषमस्तु सः ।
ममात्र भावैकरसं मनः स्थितं[1] न कामवृत्तिर्वचनीयमीक्षते ॥८२॥
निवार्यतामालि[2] किमप्ययं वटुः पुनर्विवक्षुः स्फुरितोत्तराधरः ।
न केवलं यो महतोऽपभाषते शृणोति तस्मादपि यः स पापभाक् ॥८३॥

(तपःफलोदयत्वम्)

इतो गमिष्याम्यथवेति वादिनी चचाल बाला [4]स्तनभिन्नवल्कला ।
स्वरूपमास्थाय च तां कृतस्मितः समाललम्बे वृषराजकेतनः ॥८४॥
तं वीक्ष्य वेपथुमती सरसाङ्गयष्टिर्निक्षेपणाय [5]पदमुद्धृतमुद्वहन्ती ।
मार्गाचलव्यतिकराकुलितेव सिन्धुः
शैलाधिराजतनया न ययौ न तस्थौ ॥८५॥
अद्य प्रभृत्यवनताङ्गि तवास्मि दासः
क्रीतस्तपोभिरिति वादिनि चन्द्रमौलौ ।
अह्नाय सा नियमजं क्लममुत्ससर्ज
क्लेशः फलेन हि पुनर्नवतां [6]विधत्ते ॥८६॥

इति श्रीकालिदासकृते कुमारसम्भवे महाकाव्ये पार्वतीतपःफलोदयो नाम पञ्चमः सर्गः ।५।

१. स्थिरं इति ना-पाभे० । २. किमप्यसौ इति ना-पाभे० ।
३. महतो विभाषसे इति ना-पाभे० । ४. सा च इति ना-पाभे०, गौरी इति अ-पाभे० ।
५. -र्निक्षेप एव पदमु० इति ना, अ-पाभे० । ६. पिधत्ते इति ना-पाभे० ।

# षष्ठः सर्गः

अथ विश्वात्मने गौरी सन्दिदेश मिथः सखीम् ।
दाता मे भूभृतां नाथः प्रमाणीक्रियतामिति ॥ १ ॥
तया व्याहृतसन्देशा सा बभौ निभृता प्रिये ।
चूतयष्टिरिवाभ्याशे[1] मधौ परभृतोन्मुखी ॥ २ ॥

( ऋषिस्मरणम् )

स तथेति प्रतिज्ञाय विसृज्य कथमप्युमाम् ।
ऋषीन् ज्योतिर्मयान् सप्त सस्मार स्मरशासनः ॥ ३ ॥

( ऋषि प्रादुर्भावः )

ते प्रभामण्डलैर्व्योम द्योतयन्तस्तपोधनाः ।
सारुन्धतीकाः सपदि प्रादुरासन् पुरः प्रभोः ॥ ४ ॥

( ऋषिवर्णनम् )

आप्लुतास्तीरमन्दारकुसुमोत्किरवीचिषु ।
व्योमगङ्गाप्रवाहेषु दिङ्नागमदगन्धिषु ॥ ५ ॥
मुक्तायज्ञोपवीतानि बिभ्रतो हैमवल्कलाः ।
रत्नाक्षसूत्राः प्रव्रज्यां कल्पवृक्षा इवाऽऽश्रिताः ॥ ६ ॥
अधःप्रस्थापिताश्वेन समावर्जितकेतुना ।
सहस्ररश्मिना साक्षात्[2] सप्रणाममुदीक्षिताः ॥ ७ ॥
आसक्तबाहुलतया सार्धमुद्धृतया भुवा ।
महावराहदंष्ट्रायां विश्रान्ताः प्रलयापदि ॥ ८ ॥
सर्गशेषप्रणयनाद्विश्वयोनेरनन्तरम् ।
पुरातनाः पुराविद्भिर्धातार इति कीर्तिताः ॥ ९ ॥

१. -भाष्ये इति ना-पाभे० । २. शश्वत् इति ना, अ-पाभे० ।

प्राक्तनानां विशुद्धानां परिपाकमुपेयुषाम् ।
तपसामुपभुञ्जानाः फलान्यपि तपस्विनः ॥ १० ॥

( अरुन्धतीवर्णनम् )

तेषां मध्यगता साध्वी पत्युः पादार्पितेक्षणा ।
साक्षादिव तपःसिद्धिर्बभासे बह्वरुन्धती ॥ ११ ॥
तामगौरवभेदेन मुनींश्चापश्यदीश्वरः ।
स्त्रीपुमानित्यनास्थैषा वृत्तं हि महितं सताम् ॥ १२ ॥
तद्दर्शनादभूच्छम्भोर्भूयान् [1]दारार्थमादरः ।
क्रियाणां खलु धर्म्याणां [2]सत्पत्न्यो मूलकारणम्[3] ॥ १३ ॥
धर्मेणापि पदं शर्वे कारिते पार्वतीं प्रति ।
पूर्वापराधभीतस्य कामस्योच्छ्वसितं मनः ॥ १४ ॥

( हरस्तुतिः )

अथ ते मुनयः सर्वे मानयित्वा[4] जगद्गुरुम् ।
इदमूचुरनूचानाः प्रीतिकण्टकितत्वचः ॥ १५ ॥
यद् ब्रह्म सम्यगाम्नातं यदग्नौ विधिना हुतम् ।
यच्च तप्तं तपस्तस्य विपक्वं फलमद्य नः ॥ १६ ॥
यदध्यक्षेण जगतां वयमारोपितास्त्वया ।
मनोरथस्याविषयं मनोविषयमात्मनः ॥ १७ ॥
यस्य चेतसि वर्तेथाः स तावत् कृतिनां वरः ।
किं पुनर्ब्रह्मयोनेर्यस्तव चेतसि वर्तते ॥ १८ ॥
[6]सत्यमर्काच्च सोमाच्च परमध्यास्महे पदम् ।
अद्य तूच्चैस्तरं ताभ्यां स्मरणानुग्रहात्तव ॥ १९ ॥
त्वत्सम्भावितमात्मानं बहु मन्यामहे वयम् ।
प्रायः प्रत्ययमाधत्ते स्वगुणेषूत्तमादरः ॥ २० ॥
या नः प्रीतिर्विरूपाक्ष त्वदनुध्यानसंभवा ।
सा किमावेद्यते तुभ्यमन्तरात्मासि देहिनाम् ॥२१॥

१. दारक्रियादरः इति ना-पाभे० । २. दाम्पत्यम् इति अ-पाभे० ।
३. -साधनम् इति ना, अ-पाभे० । ४. पूजयित्वा इति ना-पाभे०, प्रणिपत्य इति अ-पाभे० ।
५. -प्यपथं इति नां, अ-पाभे० । ६. नित्य- इति ना-पाभे० ।

साक्षाद् दृष्टोऽसि न पुनर्विद्मस्त्वां वयमञ्जसा ।
प्रसीद कथयाऽऽत्मानं न धियां पथि वर्तसे ॥२२॥
किं येन सृजसि व्यक्तमुत येन बिभर्षि तत् ।
अथ विश्वस्य संहर्ता भागः कतम एष ते ॥२३॥
अथवा सुमहत्येषा प्रार्थना देव तिष्ठतु ।
चिन्तितोपस्थितांस्तावच्छाधि नः करवाम किम् ॥२४॥

(हरप्रतिवचनम्)

अथ मौलिगतस्येन्दोर्विशदैर्दशनांशुभिः ।
उपचिन्वन् प्रभां तन्वीं प्रत्याह परमेश्वरः ॥२५॥
विदितं वो यथा स्वार्था न मे काश्चित् प्रवृत्तयः ।
ननु मूर्तिभिरष्टाभिरित्थम्भूतोऽस्मि सूचितः ॥२६॥
सोऽहं तृष्णातुरैर्वृष्टिं विद्युत्वानिव चातकैः ।
अरिविप्रकृतैर्देवैः प्रसूतिं प्रति याचितः ॥२७॥

(आत्मनिवेदनम्)

अत आहर्तुमिच्छामि पार्वतीमात्मजन्मने ।
उत्पत्तये[1] हविर्भोक्तुर्यजमान इवारणिम् ॥२८॥
तामस्मदर्थे युष्माभिर्याचितव्यो हिमालयः ।
विक्रियायै न कल्पन्ते सम्बन्धाः सदनुष्ठिताः ॥२९॥
उन्नतेन स्थितिमता धुरमुद्वहता भुवः ।
तेन योजितसम्बन्धं वित्त मामप्यवञ्चितम् ॥३०॥
एवं वाच्यः स कन्यार्थमिति वो नोपदिश्यते ।
भवत्प्रणीतमाचारमामनन्ति हि साधवः ॥३१॥
आर्याऽप्यरुन्धती तत्र व्यापारं[2] कर्तुमर्हति ।
प्रायेणैवंविधे कार्ये पुरन्ध्रीणां प्रगल्भता ॥३२॥
तत् प्रयातौषधिप्रस्थं सिद्धये हिमवत्पुरम् ।
महा [3]कोशीप्रपातेऽस्मिन् सङ्गमः पुनरेव नः ॥३३॥
तस्मिन् संयमिनामाद्ये जाते परिणयोन्मुखे ।
जहुः परिग्रहव्रीडां प्राजापत्यास्तपस्विनः ॥३४॥

१. उत्पादाय इति ना-पाभे० । २. साहाय्यं इति ना-पाभे० । ३. -कौशी- इति ना-पाभेः ।

ततः परममित्युक्त्वा प्रतस्थे मुनिमण्डलम् ।
भगवानपि सम्प्राप्तः[1] प्रथमोद्दिष्टमास्पदम् ॥३५॥
ते चाऽऽकाशमसिश्यामुत्पत्य परमर्षयः ।
आसेदुरोषधिप्रस्थं मनसा [2]समरंहसः ॥३६॥

(ओषधि प्रस्थवर्णनम्)

अलकामति वा[3]ह्येव वसतिं वसुसम्पदाम् ।
स्वर्गाभिष्यन्दवमनं कृत्वेवोपनिवेशितम् ॥३७॥
गङ्गास्रोतः परिक्षिप्तं वप्रान्त[4]र्ज्वलितौषधि ।
[5]बृहन्मणिशिलासालं गुप्तावपि मनोहरम् ॥३८॥
[6]जितसिंहभया नागा यत्राश्वा बिलयोनयः ।
[7]यक्षाः किम्पुरुषाः पौरा योषितो वनदेवताः ॥३९॥
शिखरासक्तमेघानां व्यज्यन्ते यत्र [8]वेश्मनाम् ।
अनुगर्जितसन्दिग्धाः करणैर्मु[9]रजस्वनाः ॥४०॥
यत्र कल्पद्रुमैरेव विलोलविटपांशुकैः ।
गृहयन्त्रपताकाश्रीरपौरादरनिर्मिता ॥४१॥
यत्र स्फटिकहर्म्येषु नक्तमापानभूमिषु ।
ज्योतिषां प्रतिबिम्बानि प्राप्नुवन्त्युपहारताम् ॥४२॥
यत्रौषधिप्रकाशेन नक्तं दर्शितसञ्चराः ।
अनभिज्ञास्तमिस्राणां दुर्दिनेष्वभिसारिकाः ॥४३॥
यौवनान्तं वयो यस्मिन्नान्तकः[10] कुसुमायुधात्[11] ।
[12]रतिखेदसमुत्पन्ना निद्रा संज्ञाविपर्ययः ॥४४॥
भ्रूभेदिभिः सकम्पोष्ठैर्ललिताङ्गुलितर्जनैः ।
यत्र कोपैः कृताः स्त्रीणा[13]माप्रसादार्थिनः प्रियाः ॥४५॥

१. संक्रान्तः इति ना, अ-पाभे० ।
२. तुल्य- इति अ-पाभे० ।
३. वांह्यौ- मुद्रितपुस्तक पाभे० ।
४. ज्वलितौ- इति ना-पाभे० ।
५. ज्वलन्मणि- इति ना-पाभे० ।
६. वीत- इति ना-पाभे० ।
७. यक्षकिम्पुरुषः इति ना-पाभे० ।
८. वेश्मसु इति ना-पाभे० ।
९. -रव- इति ना-पाभे० ।
१०. -तङ्कः इति ना-पाभे०, -नङ्गः इति अ-पाभे० ।
११. -धः इति ना, अ-पाभे० ।
१२. रतिः खेदसमुत्थानम् इति अ-पाभे० ।
१३. मग्रसा- इति ना-पाभे० ।

संतानकतरुच्छायासुप्तविद्याधराध्वगम् ।
यस्य चोपवनं बाह्यं [1]गन्धवद्गन्धमादनम् ॥४६॥

(ऋषियों का हिमालयावतारः)

[2]अथ ते मुनयो दिव्याः प्रेक्ष्य हैमवतं पुरम् ।
स्वर्गाभि[3]संधिसुकृतं वञ्चनामिव मेनिरे ॥४७॥
ते सद्मनि गिरेर्वेगादुन्मुखद्वाःस्थवीक्षिताः ।
[4]अवतेरुर्जटाभारैर्लिखितानलनिश्चलैः ॥४८॥
गगनादवतीर्णा सा यथावृद्धपुरस्सरा ।
तोयान्तर्भास्करालीव रेजे मुनिपरम्परा ॥४९॥
तानर्घ्यानर्घ्यमादाय दूरात्प्रत्युद्ययौ गिरिः ।
नमयन्सारगुरुभिः पादन्यासैर्वसुंधराम् ॥५०॥

(हिमालयप्रार्थना)

धातुताम्राधरः प्रांशुर्देवदारुबृहद्भुजः ।
प्रकृत्यैव शिलोरस्कः सुव्यक्तो हिमवानिति ॥५१॥
विधिप्रयुक्तसत्कारैः स्वयं मार्गस्य दर्शकः ।
स तैराक्रामयामास शुद्धान्तं शुद्धकर्मभिः ॥५२॥
तत्र वेत्रासनासी[5]नान्कृतासनपरिग्रहः ।
इत्युवाचेश्वरान्वाचं [6]प्राञ्जलिर्भूधरेश्वरः ॥५३॥
अपमेघोदयं वर्षमदृष्टकुसुमं फलम् ।
अतर्कितोपपन्नं वो दर्शनं प्रतिभाति मे ॥५४॥
मूढं बुद्धमिवाऽऽत्मानं [7]हैमीभूतमिवाऽऽयसम् ।
भूमेर्दिवमिवारूढं मन्ये भवदनुग्रहात् ॥५५॥
अद्यप्रभृति [8]भूतानाम[9]धिगम्योऽस्मि शुद्धये ।
यदध्यासितमर्हद्भिस्तद्धि तीर्थं प्रचक्षते ॥५६॥

१. सुगन्धिर्गन्धमादनः इति ना-पाभे०, 'सुगन्धि- इति अ-पाभे० ।
२. 'तत् कान्तं' इति ना-पाभे० । ३. 'सन्धिं सुकृतां' इति ना-पाभे० ।
४. 'अवपेतुः' इति ना-पाभे० । ५. 'अनासन-' इति ना-पाभे० ।
६. '-लिः पृथिवीधरः' इति ना, अ-पाभे० । ७. '-कृत-' इति ना-पाभे० ।
८. 'मर्त्या-' इति ना-पाभे० । ९. 'भि-' इति ना-पाभे० ।

अवैमि पूतमात्मानं द्वयेनैव द्विजोत्तमाः ।
मूर्ध्नि गङ्गाप्रपातेन धौतपादाम्भसा च वः ॥५७॥
जङ्गमं [1]प्रैष्यभावे वः स्थावरं चरणाङ्कितम् ।
विभक्तानुग्रहं मन्ये [2]द्विरूपमपि मे वपुः ॥५८॥
भवत्संभावनोत्थाय परितोषाय मूर्च्छते ।
अपि व्याप्तदिगन्तानि नाङ्गानि प्रभवन्ति मे ॥५९॥
न केवलं दरीसंस्थं भास्वतां दर्शनेन वः ।
अन्तर्गतमपास्तं मे रजसोऽपि परं तमः ॥६०॥
कर्तव्यं वो न पश्यामि स्याच्चेत्किं नोपपद्यते ।
[3]मन्ये मत्पावनायैव प्रस्थानं भवतामिह[4] ॥६१॥
तथापि तावत्कस्मिंश्चिदाज्ञां मे दातुमर्हथ ।
विनियोगप्रसादा हि किंकराः प्रभविष्णुषु ॥६२॥
एते वयममी दाराः कन्येयं कुलजीवितम् ।
ब्रूत येनात्र वः कार्यमनास्था बाह्यवस्तुषु ॥६३॥
इत्यूचिवांस्तमेवार्थं [5]गुहामुखविसर्पिणा ।
द्विरिव प्रतिशब्देन व्याजहार हिमालयः ॥६४॥

( अङ्गिरःप्रतिवचनम् )

अथाङ्गिरसमग्रण्यमुदाहरणवस्तुषु ।
ऋषयो नोदयामासुः प्रत्युवाच स भूधरम् ॥६५॥
उपपन्नमिदं सर्वमतः परमपि त्वयि ।
मनसः शिखराणां च सदृशी ते समुन्नतिः ॥६६॥
स्थाने त्वां स्थावरात्मानं विष्णुमाहुस्तथाहि ते ।
चराचराणां भूतानां कुक्षिराधारतां गतः ॥६७॥
गामधास्यत्कथं नागो मृणाल[7]मृदुभिः फणैः ।
आ रसातलमूलात्त्वमवालम्बिष्यथा न चेत् ॥६८॥

१. 'प्रेष्यपक्षे' इति ना-पाभे० । २. 'द्वैरूप्यं तेन मे कृतम्' इति ना, अ-पाभे० ।
३. 'शङ्के' इति ना-पाभे० । ४. '-दम्' इति ना-पाभे० । ५. 'दरी-' इति ना, अ-पाभे० ।
६. '-ऋषयश्चोदयासुः' इति ना-पाभे० । ७. सदृशैः इति ना, अ-पाभे० ।
८. आङ् पञ्चमी कर्म प्रवचनीयः ।

अच्छिन्नामलसंतानाः समुद्रोर्[1]म्यनिवारिताः ।
पुनन्ति [2]लोकान्पुण्यत्वात्कीर्तयः सरितश्च ते ॥६९॥
यथैव श्लाघ्यते गङ्गा पादेन परमेष्ठिनः ।
प्रभवेण द्वितीयेन तथैवोच्छ्रिरसा त्वया ॥७०॥
तिर्यगूर्ध्वमधस्ताच्च व्यापको महिमा हरेः ।
त्रिविक्रमोद्यतस्यासीत्स तु स्वाभाविकस्तव ॥७१॥
यज्ञभागभुजां मध्ये पदमा[3]तस्थुषा त्वया ।
उच्चैर्हिरण्मयं शृङ्गं सुमेरोर्वितथीकृतम् ॥७२॥
काठिन्यं स्थावरे काये [4]भवता सर्वमर्पितम् ।
इदन्तु ते [5]भक्तिनम्रं सतामाराधनं वपुः॥७३॥
[6]तदागमनकार्यं नः शृणु कार्यं तवैव तत् ।
श्रेयसामुपदेशात्तु वयमत्रांशभागिनः ॥७४॥

( हरप्रार्थना कथनम् )

अणिमादिगुणोपेतमस्पृष्टपुरुषान्तरम् ।
शब्दमीश्वर इत्युच्चैः सार्धचन्द्रं बिभर्ति यः ॥७५॥
कल्पितान्योन्यसामर्थ्यैः पृथिव्यादिभिरात्मभिः ।
[7]येनेदं ध्रियते [8]विश्वं धुर्यैर्यानमिवाध्वनि ॥७६॥
योगिनो यं विचिन्वन्ति क्षेत्राभ्यन्तरवर्तिनम् ।
अनावृत्तिभयं यस्य पदमाहुर्मनीषिणः ॥७७॥
स ते दुहितरं साक्षात् साक्षी विश्वस्य [9]कर्मणाम् ।
वृणुते वरदः शम्भुरस्मत् [10]संक्रामितैः पदैः ॥७८॥
तमर्थमिव भारत्या सुतया योक्तुमर्हसि ।
अशोच्या हि पितुः कन्या सद्भर्तृप्रतिपादिता ॥७९॥

१. -र्मिनि इति ना, अ-पाभे० ।
२. लोकं इति ना, अ-पाभे० ।
३. क्रम्य तस्थुषा इति ना-पाभे० ।
४. भवतः इति ना-पाभे० ।
५. भक्तिनम्रमर्हदारा- इति ना-पाभे० ।
६. य-इति ना-पाभे० ।
७. यस्येदं इति ना-पाभे० ।
८. व्यक्तं इति ना, अ-पाभे० ।
९. कर्मणः इति ना, अ-पाभे०
१०. संक्रमितैः इति ना-पाभे० ।

[1]यावन्त्येतानि भूतानि स्थावराणि चराणि च ।
मातरं [2]कल्पयन्त्वेनामीशो हि जगतः पिता ॥८०॥
प्रणम्य शितिकण्ठाय विबुधास्तदनन्तरम् ।
चरणौ रञ्जय[3]न्त्वस्याश्चूडामणिमरीचिभिः ॥८१॥
उमा वधूर्भवान् दाता याचितार इमे वयम् ।
वरः शम्भुरलं ह्येष त्वत्कुलोद्भूतये विधिः ॥८२॥
अस्तोतुः स्तूयमानस्य वन्द्यस्यानन्यवन्दिनः ।
सुतासम्बन्धविधिना भव विश्वगुरोर्गुरुः ॥८३॥
एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।
लीलाकमलपत्त्राणि गणयामास पार्वती ॥८४॥
शैलः सम्पूर्णकामोऽपि मेनामुखमुदैक्षत ।
प्रायेण गृहिणी[4]नेत्राः कन्यार्थेषु कुटुम्बिनः ॥८५॥
[5]मेने मेनाऽपि तत्सर्वं पत्युः कार्यमभीप्सितम् ।
भवन्त्यव्यभिचारिण्यो भर्तुरिष्टे पतिव्रताः ॥८६॥

( उमाप्रदानम् )

इदमत्रोत्तरं न्याय्यमिति बुद्ध्या विमृश्य सः ।
आददे वचसामन्ते मङ्गलालंकृतां सुताम् ॥८७॥
एहि विश्वात्मने वत्से भिक्षाऽसि परिकल्पिता ।
अर्थिनो मुनयः प्राप्तं गृहमेधिफलं मया ॥८८॥
एतावदुक्त्वा तनयामृषीनाह महीधरः ।
इयं नमति वः सर्वांस्त्रिलोचनवधूरिति ॥८९॥
ईप्सितार्थक्रियोदारं तेऽभिनन्द्य गिरेर्वचः ।
आशीर्भिरेधयामासुः पुरःपाकाभिरम्बिकाम् ॥९०॥
तां प्रणामादरस्रस्तजाम्बूनदवतंसकाम् ।
अङ्कमारोपयामास लज्जमानामरुन्धती ॥९१॥

१. यावद्वयानि इति ना-पाभे० । २. कल्पयन्त्य- इति ना-पाभे० ।
३. -न्त्यस्या- इति ना-पाभे० । ४. तन्त्राः इति ना-पाभे०
५. श्लोकोऽयं ना, अ पुस्तकयोर्न दृश्यते ।

तन्मातरश्चाश्रुमुखीं　　दुहितृस्नेहविक्लवाम् ।
वरस्यानन्यपूर्वस्य　विशोकामकरोद्　गुणैः ॥९२॥

(विवाह तिथि निश्चयः)

वैवाहिकीं　तिथिं　पृष्टास्तत्क्षणं　हरबन्धुना ।
ते　त्र्यहादूर्ध्वमाख्याय　चेरुश्चीरपरिग्रहाः ॥९३॥
ते हिमालयमामन्त्र्य पुनः प्राप्य च शूलिनम् ।
सिद्धश्चास्मै　निवेद्यार्थं　तद्विसृष्टाः　खमुद्ययुः ॥९४॥
पशुपतिरपि तान्यहानि कृच्छ्रादगमयदद्रिसुतासमागमोत्कः ।
कमपरमवशं न विप्रकुर्युर्विभुमपि तं यदमी स्पृशन्ति भावाः ॥९५॥

इति श्रीकालिदासकृते कुमारसम्भवे महाकाव्ये उमाप्रदानो नाम षष्ठः सर्गः ।६।

१. तां इति ना-पाभे० ।　　२. चेलु- इति ना-पाभे० ।　　३. प्रेक्ष्य इति ना-पाभे० ।

# सप्तमः सर्गः

(विवाहदीक्षानुष्ठानम्)

अथौषधीनामधिपस्य वृद्धौ तिथौ च जामित्रगुणान्वितायाम् ।
समेतबन्धुर्हिमवान् सुताया विवाहदीक्षाविधिमन्वतिष्ठत् ॥१॥

(विवाहौत्सुक्यम)

वैवाहिकैः कौतुकसंविधानैर्गृहे गृहे व्यग्रपुरन्ध्रिवर्गम् ।
आसीत् पुरं सानुमतोऽनुरागादन्तःपुरश्चैककुलोपमेयम् ॥२॥

सन्तानकाकीर्णमहापथं तच्चीनांशुकैः कल्पितकेतुमालम् ।
[1]भासोज्ज्वलत् काञ्चनतोरणा[2] नां स्थानान्त[3]रं स्वर्ग इवाऽऽबभासे ॥३॥

एकैव सत्यामपि पुत्रपङ्क्तौ चिरस्य[4]दृष्टेव मृतोत्थितेव ।
[5]आसन्नपाणिग्रहणेति पित्रोरुमा विशेषोच्छ्वसितं बभूव ॥४॥

अङ्काद् ययावङ्कमुदीरिताशीः सा मण्डनान्मण्डनमन्वभुङ्क्त ।
सम्बन्धिभिन्नोऽपि गिरेः कुलस्य स्नेहस्तदेकायतनं जगाम ॥५॥

मैत्रे मुहूर्ते शशलाञ्छनेन योगं गतासूत्तरफल्गुनीषु ।
तस्याः[6]शरीरे प्रतिकर्म चक्रुर्बन्धुस्त्रियो याः पतिपुत्रवत्यः ॥६॥

सा गौरसिद्धार्थनिवेशवद्भिर्दूर्वाप्रवालैः प्रतिभिन्नशोभम् ।
निर्नाभिकौशेयमुपात्तबाणमभ्यङ्गनेपथ्यमलञ्चकार ॥७॥

बभौ च सम्पर्कमुपेत्य बाला [9]नवेन दीक्षाविधिसायकेन ।
करेण भानोर्बहुलावसाने सन्धुक्ष्यमाणेव शशाङ्करेखा ॥८॥

१. 'भासा ज्वलत्' इति ना, अ-पाभे० ।
२. 'ङ्क' इति ना-पाभे० ।
३. 'रे' इति ना-पाभे० ।
४. 'दृष्टेरम्' इति अ-पाभे० ।
५. 'उपोढ-' इति ना-पाभे० ।
६. 'ता' इति ना-पाभे० ।
७. 'शरीरग्र' इति ना-पाभे० ।
८. 'उन्नीवि' इति ना-पाभे० ।
९. 'विवाह' इति ना-पाभे ।

तां लोध्रकल्केन हृताङ्गतैलामाश्यानकालेयकृताङ्गरागाम् ।
वासो वसानामभिषेकयोग्यं नार्यश्चतुष्काभि[1]मुखं व्यनैषुः ॥९॥
विन्यस्तवैदूर्यशिलातलेऽस्मि [2]न्नाबद्धमुक्ता फलभक्ति[4]चित्रे ।
आवर्जिताष्टापदकुम्भतोयैः सतूर्यमेनां स्नपयाम्बभूवुः ॥१०॥
सा मङ्गलस्नानविशुद्धगात्री गृहीत[5]वत्युद्गमनीयवस्त्रम् ।
निर्वृत्तपर्जन्यजलाभिषेका प्रफुल्लकाशा वसुधेव रेजे ॥११॥
तस्मात् प्रदेशाच्च वितानवन्तं युक्तं मणिस्तम्भचतुष्टयेन ।
पतिव्रताभिः परिगृह्य निन्ये क्लृप्तासनं कौतुकवेदिमध्यम् ॥१२॥
तां प्राङ्मुखीं तत्र निवेश्य तन्वीं क्षणं व्यलम्बन्त पुरोनिषण्णाः ।
भूतार्थशोभाह्रियमाणनेत्राः प्रसाधने सन्निहितेऽपि नार्यः ॥१३॥
धूपोष्मणा त्याजितमार्द्रभावं केशान्तमन्तःकुसुमं तदीयम् ।
पर्याक्षिपत् काचिदुदारबन्धं दूर्वावता पाण्डुमधूकदाम्ना ॥१४॥
[8]विन्यस्तशुक्लागुरु चक्रुरङ्गं गोरोचनापत्रविभक्तमस्याः ।
सा चक्रवाकांङ्कितसैकतायास्त्रिस्रोतसः कान्तिमतीत्य तस्थौ ॥१५॥
[9]लग्नद्विरेफ परिभूय पद्मं समेघलेखं[10] शशिनश्च बिम्बम् ।
तदाननश्रीरलकैः प्रसिद्धैश्चिच्छेद सादृश्यकथाप्रसङ्गम् ॥१६॥
कर्णार्पितो लोध्रकषायरूक्षे गोरोचना [11]क्षेपनितान्तगौरे ।
तस्याः कपोले परभागलाभाद्बबन्ध चक्षूंषि यवप्ररोहः ॥१७॥
रेखाविभक्तः सुविभक्तगात्र्याः किञ्चिन्मधूच्छिष्टविमृष्टरागः ।
कामप्यभिख्यां स्फुरितैरपुष्यदासन्नलावण्यफलोऽधरोष्ठः ॥१८॥
पत्युः शिरश्चन्द्रकलामनेन स्पृशेति सख्या परिहासपूर्वम् ।
सा रञ्जयित्वा चरणौ कृताशीर्माल्येन तां निर्वचनं जघान ॥१९॥

१. 'मुखीम' इति ना-पाभे० ।
२. 'न्नावि' इति ना-पाभे० ।
३. 'कृत' इति ना-पाभे० ।
४. 'लेखे' इति ना-पाभे० ।
५. 'प' इति मुद्रितपुस्तकपाठः, 'प्र' इति अ-पाभे० ।
६. 'स्वा' इति मुद्रितपुस्तक पाठः ।
७. 'निवृ' इति ना-पाभे० ।
८. 'प्रसन्न' इति ना-पाभे० ।
९. 'लीन इति ना-पाभे० ।
१०. 'लेशं' इति ना-पाभे० ।
११. 'भेद' इति ना-पाभे०, 'भङ्ग' इति अ-पाभे०

तस्याः सुजातोत्पलपत्रकान्ते प्रसाधिकाभिर्नयने [1]निरीक्ष्य ।
न चक्षुषोः कान्तिविशेषबुद्ध्या कालाञ्जनं मङ्गलमित्युपात्तम् ॥२०॥
सा सम्भवद्भिः कुसुमैर्लतेव ज्योतिर्भिरुद्यद्भिरिव त्रियामा ।
सरिद्विहङ्गैरिव लीयमानैरामुच्यमानाभरणा चकाशे ॥२१॥
आत्मानमालोक्य च शोभमानमादर्शबिम्बे स्तिमितायताक्षी ।
हरोपयाने त्वरिता बभूव स्त्रीणां प्रियालोकफलो हि वेशः ॥२२॥
अथाङ्गुलिभ्यां हरितालमार्द्र[2]माङ्गल्यमादाय मनः शिलाश्च ।
कर्णावसक्तामलदन्तपत्रं माता तदीयं मुख[3]मुन्नमय्य ॥२३॥
उमास्तनोद्भेदमनुप्रवृद्धो मनोरथो यः प्रथमं बभूव ।
तमेव मेना दुहितुः कथञ्चिद् विवाहदीक्षातिलकश्चकार ॥२४॥
बबन्ध चास्राकुलदृष्टिरस्याः स्थानान्तरे कल्पितसन्निवेशम् ।
धात्र्यङ्गुलीभिः प्रतिसार्यमाणमूर्णामयं कौतुकहस्तसूत्रम् ॥२५॥
क्षीरोदवेलेव सफेनपुञ्जा पर्याप्तचन्द्रेव शरत्त्रियामा ।
नवं[4]नवक्षौमनिवासिनी सा भूयो बभौ दर्पणमादधाना ॥२६॥
तामर्चिताभ्यः कुलदेवताभ्यः कुलप्रतिष्ठां प्रणमय्य माता ।
अकारयत् कारयितव्यदक्षा क्रमेण पादग्रहणं सतीनाम् ॥२७॥
अखण्डितं प्रेम लभस्व पत्युरित्युच्यते ताभिरुमा स्म नम्रा ।
तया तु तस्यार्धशरीर[5]भाजा पश्चात्कृताः स्निग्धजनाशिषोऽपि ॥२८॥
इच्छाविभूत्योरनुरूपमद्रिस्तस्याः कृती कृत्यमशेषयित्वा ।
सभ्यः सभायां सुहृदास्थितायां तस्थौ वृषाङ्कागम[6]नप्रतीक्षः ॥२९॥
तावद् भवस्यापि कुबेरशैले तत्पूर्वपाणिग्रहणानुरूपम् ।
प्रसाधनं मातृभिरादृताभिर्न्यस्तं पुरस्तात् पुरशासनस्य ॥३०॥
तद्गौरवान्मङ्गलमण्डनश्रीः सा पस्पृशे केवलमीश्वरेण ।
[7]स एव वेशः परिणेतुरिष्टं भावान्तरं तस्य विभोः प्रपेदे[8] ॥३१॥

१. 'समीक्ष्य' इति ना-अ पाभे० ।
२. 'म' इति ना-पाभे० ।
३. 'मुन्निनाय' इति ना-पाभे० ।
४. 'नवं' इति अ-पाभे०
५. -लाभात्- इति ना०, अ-पाभे० ।
६. -नं प्रतीक्ष्य- इति ना-पाभे० ।
७. स्वभाववेषः इति ना, अ पाभे० ।
८. तु० शांगृ १,१२ ।

बभूव भस्मैव सिताङ्गरागः कपासमेवामलशेखरश्रीः ।
उपान्तभागेषु च रोचनाङ्को [1]गजाजिनस्यैव दुकूलभावः ॥३२॥
शङ्खान्तरद्योति विलोचनं यदन्तर्निविष्टा[2]मलपिङ्गतारम् ।
सान्निध्यपक्षे हरितालमय्यास्तदेव जातं तिलकक्रियायाः ॥३३॥
यथाप्रदेशं भुजगेश्वराणां करिष्यतामाभरणान्तरत्वम् ।
शरीरमात्रं विकृतिं प्रपेदे तथैव तस्थुः फणरत्नशोभाः ॥३४॥
दिवाऽपि निष्ठ्यूतमरीचिभासा बाल्यादनाविष्कृतलाञ्छनेन ।
चन्द्रेण नित्यं प्रतिभिन्नमौलेश्चूडामणेः किं ग्रहणं हरस्य ॥३५॥
इत्यद्भुतैकप्रभवः प्रभावात् प्रसिद्धनेपथ्यविधेर्विधाता ।
आत्मानमासन्नगणोपनीते [3]खड्गे [4]निषक्तप्रतिमं ददर्श ॥३६॥

( हरप्रस्थानम् )

स गोपतिं नन्दिभुजावलम्बी शार्दूलचर्मान्तरितोरुपृष्ठम् ।
तद्भक्तिसंक्षिप्तबृहत्प्रमाणमारुह्य कैलासमिव प्रतस्थे ॥३७॥
तं मातरो देवमनुव्रजन्त्यः स्ववाहनक्षोभचलावतंसाः ।
मुखैः प्रभामण्डल[5]रेणुगौरैः पद्माकरं[6] चक्रुरिवान्तरिक्षम् ॥३८॥
तासाञ्च पश्चात् कनकप्रभाणां काली कपालाभरणा चकाशे ।
बलाकिनी नीलजयोदरा[7]जी दूरं पुरःक्षिप्तशतह्रदेव ॥३९॥
ततो गणैः शूलभृतः पुरोगैरुदीरितो मङ्गलतूर्यघोषः ।
विमानशृङ्गाण्यवगाहमानः शशंस सेवावसरं सुरेभ्यः ॥४०॥
उपाददे तस्य सहस्ररश्मिस्त्वष्ट्रा नवं निर्मितमातपत्रम् ।
स तद्दुकूलादविदूरमौलिर्बभौ पतद्गङ्ग इवोत्तमाङ्गे ॥४१॥
मूर्ते च गङ्गायमुने तदानीं सचामरे देवमसेविषाताम् ।
समुद्रगारूपविपर्ययेऽपि सहंसपाते इव लक्ष्यमाणे ॥४२॥
तमभ्यगच्छत् [8]प्रथमो विधाता श्रीवत्सलक्ष्मा पुरुषश्च[9]साक्षात् ।
जयेति वाचा महिमानमस्य संवर्धयन्तौ हविषेव वह्निम् ॥४३॥

१. -सिह्रा- इति ना-पाभे० । २. -नल- इति ना-पाभे० ३. टङ्के इति ना०-पाभे० ।
४. -निषिल- इति ना, श्र-पाभे० । ५. -राजि- इति ना-पाभे०
६. -री- इति ना, श्र-पाभे० । ७. -जिर्दूर इति ना, श्र-पाभे० ।
८. प्रथमं इति श्र-पाभे० । ९. पश्चात् इति श्र-पाभे० ।

एकैव मूर्त्तिर्बिभिदे त्रिधा सा सामान्यमेषां प्रथमावरत्वम् ।
विष्णोर्हरस्तस्य हरिः कदाचिद् वेधास्तयोस्तावपि धातुराद्यौ ॥४४॥
तं लोकपालाः पुरुहूतमुख्याः श्रीलक्षणोत्सर्गविनीतवेशाः ।
दृष्टिप्रदाने कृतनन्दिसंज्ञास्तद्दर्शिताः प्राञ्जलयः प्रणेमुः ॥४५॥
कम्पेन मूर्ध्नः शतपत्रयोनिं वाचा हरिं वृत्रहणं स्मितेन ।
आलोकमात्रेण सुरानशेषान् सम्भावयामास यथाप्रधानम् ॥४६॥
तस्मै जयाशीः ससृजे पुरस्तात् सप्तर्षिभिस्तान् स्मितपूर्वमाह ।
विवाहयज्ञे विततेऽत्र यूयमध्वर्यवः पूर्ववृता मयेति ॥४७॥
विश्वावसुप्राग्र[1]हरैः प्रवीणैः सङ्गीयमानत्रिपुरा[2] वदानः ।
अध्वानमध्वान्तविकारलङ्घ्य[3] स्ततार ताराधिपखण्डधारी ॥४८॥
खे खेलगामी तमुवाह वाहः सशब्दचामीकरकिङ्किणीकः ।
तटाभिघातादिव लग्नपङ्के [4]धुन्वन् मुहुः प्रोतघने विषाणे ॥४९॥
स प्रापदप्राप्तपराभियोगं नगेन्द्रगुप्तं नगरं मुहूर्त्तात् ।
पुरो[5]विलग्नैर्हरदृष्टिपातैः सुवर्णसूत्रैरिव कृष्यमाणः[6] ॥५०॥
तस्योपकण्ठे घननीलकण्ठः कुतूहलादुन्मुखपौरदृष्टः ।
[7]स्वबाणचिह्नादवतीर्य मार्गादासन्नभूपृष्ठमियाय देवः ॥५१॥
तमृद्धिमद्बन्धुजनाधिरूढैर्वृन्दैर्गजानां गिरिचक्रवर्ती ।
प्रत्युज्जगामागमनप्रतीतः प्रफुल्लवृक्षैः कटकैरिव स्वैः ॥५२॥
वर्गावुभौ देवमहीधराणां द्वारे पुरस्योद्घटितापिधाने ।
समीयतुर्दूरविसर्पिघोषौ भिन्नैकसेतू पयसामिवौघौ ॥५३॥
ह्रीमानभूद्भूमिधरो हरेण त्रैलोक्यवन्द्येन कृतप्रणामः ।
पूर्वं महिम्ना स हि तस्य [8]दूरमावर्जितं नात्मशिरो विवेद ॥५४॥

( हरस्वागतम् )

स प्रीतियोगाद्विकसन्मुखश्रीर्जामातुरग्रेसरतामुपेत्य ।
प्रावेशयन्मन्दिरमृद्धमेनमागुल्फ[9]कीर्णापणमार्गपुष्पम् ॥५५॥

१. -सरै- इति ना-पाभे० । २. -पदानः इति ना, अ-पाभे० ।
३. -ङ्घ्यां तता इति अ-पाभे० । ४. धून्वन् इति ना-पाभे० । ५. -ऽव- इति ना-पाभे० ।
६. -णम् इति ना-पाभे० । ७. स्ववाह- इति ना, अ-पाभे० ।
८. दूरादावर्जितं इति ना-पाभे० । ९. -गाढार्पितमा- इति ना-पाभे० ।

( पुरसुन्दरीविचेष्टितानि )

[1]तस्मिन्मुहूर्ते पुरसुन्दरीणामीशानसंदर्शनलालसानाम् ।
प्रासादमालासु बभूवुरित्थं त्यक्तान्यकार्याणि विचेष्टितानि ॥५६॥
आलोकमार्गं सहसा व्रजन्त्या कयाचिदुद्वेष्टनवान्तमाल्यः ।
बन्धुं न संभावित एव तावत्करेण रुद्धोऽपि च केश [2]पाशः ॥५७॥
प्रसाधिकालम्बितमग्रपादमाक्षिप्य काचिद् द्रवरागमेव ।
उत्सृष्टलीलागतिरा गवाक्षादलक्तकाङ्कां पदवीं ततान ॥५८॥
विलोचनं दक्षिणमञ्जनेन सम्भाव्य तद्वञ्चितवामनेत्रा ।
तथैव वातायनसन्निकर्षं ययौ शलाकामपरा वहन्ती ॥५९॥
जालान्तरप्रेषितदृष्टिरन्या प्रस्थानभिन्नां न बबन्ध नीवीम् ।
नाभिप्रविष्टाभरणप्रभेण हस्तेन तस्थाववलम्ब्य वासः ॥६०॥
अर्धाचिता सत्वरमुत्थितायाः पदे पदे दुर्निमिते गलन्ती ।
कस्याश्चिदासीद्रसना तदानीमङ्गुष्ठमूलार्पितसूत्रशेषा ॥६१॥
तासां मुखैरासवगन्धगर्भैर्व्याप्तान्तराः सान्द्रकुतूहलानाम् ।
विलोलनेत्रभ्रमरैर्गवाक्षाः सहस्रपत्रा [3]भरणा इवाऽऽसन् ॥६२॥
तावत् पताकाकुलमिन्दुमौलिरुत्तोरणं राजपथं प्रपेदे ।
प्रासादशृङ्गाणि दिवाऽपि कुर्वञ् ज्योत्स्नाभिषेकद्विगुणद्युतीनि ॥६३॥
तमेकदृश्यं नयनैः पिबन्त्यो नार्यो न जग्मुर्विषयान्तराणि ।
तथाहि शेषेन्द्रियवृत्तिरासां [4]सर्वात्मना चक्षुरिव प्रविष्टा ॥६४॥
स्थाने तपो दुश्चरमेतदर्थमपर्णया पेलवयाऽपि तप्तम् ।
या दास्यमप्यस्य लभेत नारी सा स्यात् कृतार्था किमुताङ्कशय्याम् ॥६५॥
[5]परस्परेण स्पृहणीयशोभं नचेदिदं द्वन्द्वमयोजयिष्यत् ।
अस्मिन् द्वये रूपनिधानयत्नः पत्युः प्रजानां विफलोऽभविष्यत् ॥६६॥
न नूनमारूढरुषा शरीरमनेन दग्धं कुसुमायुधस्य ।
[6]व्रीडादमुं देवमुदीक्ष्य मन्ये सन्न्यस्तदेहः स्वयमेव कामः ॥६७॥

१. तु० सस्थ० रघु० ७।५-१६ ।
२. -हस्तः इति ना-पाभे० ।
३. -वरणा इति ना-पाभे० ।
४. विनोपघातेन जडीबभूव इति ना-पाभे० ।
५. श्लोकोऽयं ना-पुस्तके नास्ति ।
६. व्रीला- इति ना-पाभे० ।

अनेन सम्बन्धमुपेत्य दिष्ट्या मनोरथप्रार्थितमीश्वरेण ।
मूर्धानमालि क्षितिधारणोच्चमुच्चैस्तरं वक्ष्यति शैलराजः ॥६८॥

( हिमालयगृहावतारः )

इत्योषधिप्रस्थविलासिनीनां शृण्वन् कथाः श्रोत्रसुखास्त्रिनेत्रः ।
[1]केयूरचूर्णीकृतलाज[2]मुष्टिं हिमालयस्याऽऽलयमाससाद ॥६९॥
तत्रावतीर्याच्युतदत्तहस्तः शरद्घनाद्दीधितिमानिवोक्ष्णः ।
क्रान्तानि पूर्वं कमलासनेन कक्ष्यान्तराण्यद्रिपतेर्विवेश ॥७०॥
तमन्वगन्द्रिप्रमुखाश्च देवाः सप्तर्षिपूर्वाः परमर्षयश्च ।
गणाश्च गिर्यालयम[3]भ्यगच्छन् [4]प्रशस्तमारम्भमिवोत्तमार्थाः ॥७१॥
तत्रेश्वरो विष्टरभाग् यथावत् सरत्नमर्घ्यं मधुमच्च गव्यम् ।
नवे दुकूले च नगोपनीतं प्रत्यग्रहीत् सर्वममन्त्रवर्जम् ॥७२॥
दुकूलवा[5]साः [6]स वधूसमीपं निन्ये विनीतैरवरोध[7]दक्षैः ।
वेला[8]समीपं स्फुटफेनराजिर्नवैरुदन्वानिव चन्द्रपादैः ॥७३॥
तया[9] प्रवृद्धाननचन्द्रकान्त्या प्रफुल्लचक्षुःकुमुदः कुमार्या ।
प्रसन्नचेतःसलिलः शिवोऽभूत् संसृज्यमानः शरदेव लोकः ॥७४॥
तयोः समापत्तिषु कातराणि किञ्चिद्व्यवस्थापितसंहृतानि ।
[10]ह्रीयन्त्रणां तत्क्षणमन्वभूवन्नन्योन्यलोलानि विलोचनानि ॥७५॥
तस्याः करं शैलगुरूपनीतं जग्राह ताम्राङ्गुलिमष्टमूर्तिः ।
उमातनौ गूढतनोः स्मरस्य तच्छङ्किनः पूर्वमिव प्ररोहम् ॥७६॥
रोमोद्गमः प्रादुरभूदुमायाः स्विन्नाङ्गुलिः पुङ्गवकेतुरासीत् ।
वृत्तिस्तयोः पाणिसमागमेन समं विभक्तेव मनोभवस्य[11] ॥७७॥
प्रयुक्तपाणिग्रहणं यदन्यद्वधूवरं पुष्यति कान्तिमग्र्याम् ।
सान्निध्ययोगादनयोस्तदानीं किं कथ्यते श्रीरुभयस्य तस्य ॥७८॥

१. कर्पू- इति ना-पाभे० ।　२. -मुष्टिर्हि- इति ना-पाभे० ।
३. -न्व- इति ना-पाभे० ।　४. यशस्यमा- इति ना-पाभे० ।
५. -नु इति ना-पाभे० ।　६. सोऽथ इति ना-पाभे० ।
७. -रक्षैः इति ना-पाभे० ।　८. -सकाशं इति ना-पाभे० ।
९. -बि- इति ना-पाभे० ।　१०. तु० रघु० ७,२३ ।　११. तु० रघु० ७,२२ ।

( पदक्रमणम् )

प्रदक्षिणप्रक्रमणात् कृशानोरुदर्चिषस्तन्मिथुनं [1]चकाशे ।
मेरो[2]रुपान्तेष्विव वर्तमानमन्योन्यसंसक्तमहस्त्रियामम् ॥७९॥
तौ दम्पती त्रिः परिणीय वह्निमन्योन्यसंस्पर्शनिमीलिताक्षौ ।
स कारयामास वधूं पुरोधास्तस्मिन् समिद्धार्चिषि लाजमोक्षम् ॥८०॥
सा लाजधूमाञ्जलिमिष्टगन्धं गुरूपदेशाद्वदनं निनाय ।
कपोलसंसर्पिशिखः स तस्या मुहूर्तकर्णोत्पलतां प्रपेदे ॥८१॥
तदीषदार्द्रारुणगण्ड[3]लेखमुच्छ्वासिकालाञ्जनरागमक्ष्णोः ।
वधूमुखं क्लान्तयवावतंसमाचारधूमग्रहणाद् बभूव ॥८२॥
वधूं[4]द्विजः प्राह तवैष वत्से वह्निर्विवाहं प्रति[5]कर्मसाक्षी ।
शिवेन भर्त्रा सह धर्मचर्या कार्या त्वया मुक्तविचारयेति ॥८३॥
आलोचनान्तंश्रवणे[6]वितत्य पीतं गुरोस्तद् वचनं भवान्या ।
निदाघकालोल्वण[7]तापयेव माहेन्द्रमम्भः प्रथमं पृथिव्या ॥८४॥

( ध्रुवदर्शनम् )

ध्रुवेण भर्त्रा ध्रुवदर्शनाय प्रयुज्यमाना प्रियदर्शनेन ।
सा दृष्ट इत्याननमुन्नमय्य ह्रीसन्नकण्ठी कथमप्युवाच ॥८५॥
इत्थं विधिज्ञेन पुरोहितेन प्रयुक्तपाणिग्रहणोपचारौ ।
प्रणेमतुस्तौ पितरौ प्रजानां पद्मासनस्थाय पितामहाय ॥८६॥
वधूर्विधात्रा प्रतिनन्द्यते स्म कल्याणि वीरप्रसवा भवेति ।
वाचस्पतिः सन्नपि सोऽष्ट[8]मूर्तौ त्वाशास्यचिन्तास्तिमितो बभूव ॥८७॥
क्लृप्तोपचारां चतुर[9]स्रवेदीं तावेत्य पश्चात् कनकासनस्थौ ।
जायापती लौकिकमेष[10]णीयमार्द्राक्षतारोपणमन्वभूताम् ॥८८॥

१. बभासे इति ना-पाभे० रघु० ७,२४ ।
२. -रिवान्ते, परिव- इति ना-पाभे० ।
३. -रेख- इति ना-पाभे० तु० रघु० ७,२७ ।
४. गिरिः इति ना-पाभे० ।
५. पूर्वं- इति ना, अ-पाभे० ।
६. विवृत्य इति ना-पाभे० ।
७. -भेद- इति ना, अ-पाभे० ।
८. -मूर्त्तेरा- इति ना-पाभे० तु० शांगृ १,१७ ।
९. -न्त-' इति ना-पाभे० ।
१०. -षितव्य- इति ना, अ-पाभे० ।

पत्रान्तल[1]ग्नैर्जलबिन्दु[2]जालैरा[3]कृष्टमुक्ताफलजालशोभम् ।
तयोरुपर्यायतनालदण्डमाधत्त लक्ष्मीः कमलातपत्रम् ॥८९॥
द्विधा प्रयुक्तेन च वाङ्मयेन सरस्वती तन्मिथुनं नुनाव ।
संस्कारपूतेन वरं वरेण्यं वधूं सुखग्राह्यनिबन्धनेन ॥९०॥
तौ . सन्धिषु व्यञ्जितवृत्तिभेदं रसान्तरेषु प्रतिबद्धरागम् ।
अपश्यतामप्सरसां मुहूर्तं प्रयोगमाद्यं ललिताङ्गहारम् ॥९१॥

( मदनपुनरुज्जीवनप्रार्थना )

देवास्तदन्ते हरमूढभार्यं किरीट[4]बद्धाञ्जलयो निपत्य ।
शापावसा[5]ने प्रतिपन्नमूर्तेर्ययाचिरे पञ्चशरस्य सेवाम् ॥९२॥
तस्यानुमेने भगवान् विमन्युर्व्यापारमात्मन्यपि सायकानाम् ।
[6]कालप्रयुक्ता खलु[7]कार्यविद्भिर्विज्ञापना भर्तृषु सिद्धिमेति ॥९३॥

अथ विबुधगणांस्तानिन्दुमौलिर्विसृज्य
क्षितिधरपतिकन्यामाददानः करेण ।
कनककल[8]सयुक्तं भक्तिशोभासनाथं
क्षितिविरचितशय्यं कौतुकागारमागात् ॥९४॥
नवपरिणयलज्जाभूषणां तत्र गौरीं
वदनमपहरन्तीं तत्[9] कृताक्षेपमीशः ।
अपि शयनसखीभ्यो दत्तवाचं कथञ्चित्
प्रमथमुखविकारैर्हासयामास गूढम् ॥९५॥

इति श्रीकालिदासकृते कुमारसम्भवे महाकाव्ये उमापरिणयो नाम सप्तमः सर्गः ।७।

१. -म्बै- इति ना-पाभे० ।
२. -वर्षै- इति ना-पाभे० वृन्दे-इतिवर-पाभे०
३. -क्र- इति ना-पाभे० ।
४. -दष्टा-इति ना-पाभे० ।
५. -नप्रतिलब्धम्- इति ना-पाभे० ।
६. काले इति ना-पाभे० ।
७. -काल- इति ना-पाभे० ।
८. -शरक्षाशक्तिशो- इति ना-पाभे० ।
९. -कृतोत्क्षेप- इति ना-पाभे० ।

THE

# BIRTH OF THE WAR-GOD.

## Canto First.

### *UMĀ'S NATIVITY.*

FAR in the north HIMĀLAYA, lifting high
His towery summits till they cleave the sky,
Spans the wide land from east to western sea,
Lord of the hills, instinct with deity.
For him, when PṚTHU ruled in days of old
The rich earth, teeming with her gems and gold,
The vassal hills and MERU drained her breast,
To deck HIMĀLAYA, for they loved him best;
And earth, the mother, gave her store to fill
With herbs and sparkling ores the royal hill.

Proud mountain-king! his diadem of snow
Dims not the beauty of his gems below.
For who can gaze upon the moon, and dare
To mark one spot less brightly glorious there?
Who, 'mid a thousand virtues, dares to blame
One shade of weakness in a hero's fame?
Oft, when the gleamings of his mountain brass
Flash through the clouds and tint them as they pass,

Those glories mock the hues of closing day,
And heaven's bright wantons hail their hour of play ;
Try, ere the time, the magic of their glance,
And deck their beauty for the twilight dance.
Dear to the sylphs are the cool shadows thrown
By dark clouds wandering round the mountain's zone,
Till frightened by the storm and rain they seek
Eternal sunshine on each loftier peak.

Far spread the wilds where eager hunters roam,
Tracking the lion to his dreary home.
For though the melting snow has washed away
The crimson blood-drops of the wounded prey,
Still the fair pearls that graced his forehead tell
Where the strong elephant, o'ermastered, fell,
And clinging to the lion's claws, betray,
Falling at every step, the mighty conqueror's way.
There birch-trees wave, that lend their friendly aid
To tell the passion of the love-lorn maid,
So quick to learn in metal tints to mark
Her hopes and fears upon the tender bark.

List ! breathing from each cave, HIMĀLAYA leads
The glorious hymn with all his whispering reeds,
Till heavenly minstrels raise their voice in song,
And swell his music as it floats along.
There the fierce elephant wounds the scented bough
To ease the torment of his burning brow ;
And bleeding pines their odorous gum distil
To breathe rare fragrance o'er the sacred hill.

There magic herbs pour forth their streaming light
From mossy caverns through the darksome night,

And lend a torch to guide the trembling maid
Where waits her lover in the leafy shade.
Yet hath he caves within whose inmost cells
In tranquil rest the murky darkness dwells,
And, like the night-bird, spreads the brooding wing
Safe in the shelter of the mountain-king,
Unscorned, uninjured ; for the good and great
Spurn not the suppliant for his lowly state.

Why lingers yet the heavenly minstrel's bride
On the wild path that skirts HIMĀLAYA'S side ?
Cold to her tender feet—oh, cold—the snow,
Why should her steps—her homeward steps—be slow ?
'Tis that her slender ankles scarce can bear
The weight of beauty that impedes her there ;
Each rounded limb, and all her peerless charms,
That broad full bosom, those voluptuous arms.

E'en the wild kine that roam his forests bring
The royal symbols to the mountain-king.
With tails outspread, their bushy streaming hair
Flashes like moonlight through the parted air.
What monarch's fan more glorious might there be,
More meet to grace a king as proud as he ?

There, when the nymphs, within the cave's recess,
In modest fear their gentle limbs undress,
Thick clouds descending yield a friendly screen,
And blushing beauty bares her breast unseen.

With pearly dewdrops GAṄGĀ loads the gale
That waves the dark pines towering o'er the vale,
And breathes in welcome freshness o'er the face
Of wearied hunters when they quit the chase.

So far aloft, amid Himālayan steeps,
Couched on the tranquil pool the lotus sleeps,
That the bright SEVEN who star the northern sky
Cull the fair blossoms from their seats on high ;
And when the sun pours forth his morning glow
In streams of glory from his path below,
They gain new beauty as his kisses break
His darlings' slumber on the mountain lake.

Well might that ancient hill by merit claim
The power and glory of a monarch's name ;
Nurse of pure herbs that grace each holy rite,
Earth's meetest bearer of unyielding might.
The Lord of Life for this ordained him king,
And bade him share the sacred offering.

Gladly obedient to the law divine,
He chose a consort to prolong his line.
No child of earth, born of the Sages' will,
The fair nymph MENĀ pleased the sovran hill.
To her he sued, nor was his prayer denied,
The Saints' beloved was the mountain's bride.
Crowned with all bliss and beauty were the pair,
He passing glorious, she was heavenly fair.
Swiftly the seasons, winged with love, flew on,
And made her mother of a noble son,
The great MAINĀKA, who in triumph led
His Serpent beauties to the bridal bed ;
And once when INDRA'S might those pinions rent
That bare the swift hills through the firmament,
(So fierce his rage, no mountain could withstand
The wild bolt flashing from his red right hand,)

He fled to Ocean, powerful to save,
And hid his glory 'neath the friendly wave.

A gentle daughter came at length to bless
The royal mother with her loveliness ;
Born once again, for in an earlier life
High fame was hers, as ŚIVA'S faithful wife.
But her proud sire had dared the God to scorn ;
Then was her tender soul with anguish torn,
And jealous for the lord she loved so well,
Her angered spirit left its mortal cell.
Now deigned the maid, a lovely boon, to spring
From that pure lady and the mountain-king.
When Industry and Virtue meet and kiss,
Holy their union, and the fruit is bliss.

Blest was that hour, and all the world was gay,
When MENĀ'S daughter saw the light of day.
A rosy glow suffused the brightening sky ;
An odorous breeze came sweeping softly by.
Breathed round the hill a sweet unearthly strain,
And the glad heavens poured down their flowery rain.

That fair young maiden diademmed with light
Made her dear mother's fame more sparkling bright,
As the blue offspring of the Turquois Hills
The parent mount with richer glory fills,
When the cloud's voice has caused the gem to spring,
Responsive to its gentle thundering.

Then was it sweet, as days flew by, to trace
The dawning charm of every infant grace,
Even as the crescent moons their glory pour
More full, more lovely than the eve before.

As yet the maiden was unknown to fame ;
Child of the Mountain was her only name.
But when her mother, filled with anxious care
At her srern penance, cried Forbear ! Forbear !
To a new title was the warning turned,
And UMĀ was the name the maiden earned.

Loveliest was she of all his lovely race,
And dearest to her father. On her face
Looking with love he ne'er could satisfy
The thirsty glances of a parent's eye.
When spring-tide bids a thousand flowerets bloom
Loading the breezes with their rich perfume,
Though here and there the wandering bee may rest,
He loves his own—his darling mango—best.
The Gods' bright river bathes with gold the skies,
And pure sweet eloquence adorns the wise.
The flambeau's glory is the shining fire ;
She was the pride, the glory of her sire,
Shedding new lustre on his old descent,
His loveliest child, his richest ornament.

The sparkling GAṄGĀ laved her heavenly home,
And o'er her islets would the maiden roam
Amid the dear companions of her play
With ball and doll to while the hours away.

As swans in autumn in assembling bands
Fly back to GAṄGĀ'S well-remembered sands :
As herbs beneath the darksome shades of night
Collect again their scattered rays of light :
So dawned upon the maiden's waking mind
The far-off memory of her life resigned,
And all her former learning in its train,
Feelings, and thoughts, and knowledge came again.

Now beauty's prime, that craves no artful aid,
Ripened the loveliness of that young maid :
That needs no wine to fire the captive heart,—
The bow of Love without his flowery dart.
There was a glory beaming from her face,
With love's own light, and every youthful grace :
Ne'er had the painter's skilful hand portrayed
A lovelier picture than that gentle maid ;
Ne'er sun-kissed lily more divinely fair
Unclosed her beauty to the morning air.

Bright as a lotus, springing where she trod,
Her glowing feet shed radiance o'er the sod.
That arching neck, the step, the glance aside,
The proud swans taught her as they stemmed the tide,
Whilst of the maiden they would fondly learn
Her anklets' pleasant music in return.

When the Almighty Maker first began
The marvellous beauty of that child to plan,
In full fair symmetry each rounded limb
Grew neatly fashioned and approved by Him :
The rest was faultless, for the Artist's care
Formed each young charm most excellently fair
As if his moulding hand would fain express
The visible type of perfect loveliness.

What thing of beauty may the poet dare
With the smooth wonder of those limbs compare ?
The young tree springing by the brooklet's side ?
The rounded trunk, the forest-monarch's pride ?
Too rough that trunk, too cold that young tree's stem ;
A softer, warmer thing must vie with them.

Her hidden beauties though no tongue may tell,
Yet ŚIVA'S love will aid the fancy well:
No other maid could deem her boasted charms
Worthy the clasp of such a husband's arms.
Between the partings of fair UMĀ'S vest
Came hasty glimpses of a lovely breast;
So closely there the sweet twin hillocks rose,
Scarce could the lotus in the vale repose.
And if her loosened zone e'er slipped below,
All was so bright beneath the mantle's flow,
So dazzling bright, as if the maid had braced
A band of gems to sparkle round her waist;
And the dear dimples of her downy skin
Seemed fitting couch for love to revel in.
Her arms were softer than the flowery dart,
Young KĀMA'S arrow, that subdues the heart;
For vain his strife with ŚIVA, till at last
He chose those chains to bind his conqueror fast.
E'en the new moon poured down a paler beam
When her long fingers flashed their rosy gleam,
And brighter than Aśoka's blossom threw
A glory round, like summer's evening hue.
The strings of pearl across her bosom thrown
Increased its beauty, and enhanced their own,—
Her breast, her jewels seeming to agree,
The adorner now, and now the adorned to be.
When BEAUTY gazes on the fair full moon,
No lotus charms her, for it blooms at noon:
If on that flower she feed her raptured eye,
No moon is shining from the mid-day sky;
She looked on UMĀ'S face, more heavenly fair,
And found their glories both united there.

The loveliest flower that ever opened yet
Laid in the fairest branch : a fair pearl set
In richest coral, with her smile might vie
Flashing through lips bright with their rosy dye.
And when she spoke, upon the maiden's tongue,
Distilling neatar, such rare accents hung,
The sweetest note that e'er the Koil poured
Seemed harsh and tuneless as a jarring chord.
The melting glance of that soft liquid eye,
Tremulous like lilies when the breezes sigh,
Which learnt it first—so winning and so mild—
The gentle fawn, or MENĀ'S gentler child ?
And oh, the arching of her brow ! so fine
Was the rare beauty of its pencilled line,
Love gazed upon her forehead in despair
And spurned the bow he once esteemed so fair :
Her long bright tresses too might shame the pride
Of envious yaks who roamed the mountain-side,—
Surely the Maker's care had been to bring
From Nature's store each sweetest, loveliest thing,
As if the world's Creator would behold
All beauty centred in a single mould.

When holy NĀRADA—Saint who roams at will—
First saw the daughter of the royal hill,
He hailed the bride whom ŚIVA'S love should own
Half of himself, and partner of his throne.
HIMĀLAYA listened, and the father's pride
Would yield the maiden for no other's bride :
To Fire alone of all bright things we raise
The holy hymn, the sacrifice of praise.
But still the monarch durst not, could not bring
His child, unsought, to Heaven's supremest King ;

But as a good man fears his earnest prayer
Should rise unheeded, and with thoughtful care
Should for some friend his eager suit to aid,
Thus great HIMĀLAYA in his awe delayed.

Since the sad moment when his gentle bride
In the full glory of her beauty died,
The mournful ŚIVA in the holy grove
Had dwelt in solitude, and known not love.
High on that hill where musky breezes throw
Their balmy odours o'er eternal snow ;
Where heavenly minstrels pour their notes divine,
And rippling GAṄGĀ laves the mountain pine,
Clad in a coat of skin all rudely wrought
He lived for prayer and solitary thought.
The faithful band that served the hermit's will
Lay in the hollows of the rocky hill,
Where from the clefts the dark bitumen flowed.
Tinted with mineral dyes their bodies glowed ;
Clad in rude mantles of the birch-tree's rind,
With bright red garlands was their hair entwined.
The holy bull before his master's feet
Shook the hard-frozen earth with echoing feet,
And as he heard the lion's roaring swell
In distant thunder from the rocky dell,
In angry pride he raised his voice of fear
And from the mountain drove the startled deer.

Bright fire—a shape the God would sometimes wear
Who takes eight various forms—was glowing there.
Then the great deity who gives the prize
Of penance, prayer, and holy exercise,
As though to earn the meed he grants to man,
Himself the penance and the pain began.

Now to that holy lord, to whom is given
Honour and glory by the Gods in heaven,
The worship of a gift HIMĀLAYA paid,
And towards his dwelling sent the lovely maid ;
Her task, attended by her youthful train,
To woo his widowed heart to love again.

To hermit welcomed with a courteous brow
That gentle enemy of hermit vow.
The still pure breast where Contemplation dwells
Defies the charmer and the charmer's spells.
Calm and unmoved he viewed the wondrous maid,
And bade her all his pious duties aid.
She culled fresh blossoms at the God's command,
Sweeping the altar with a careful hand ;
The holy grass for sacred rites she sought,
And day by day the fairest water brought.
And if the unwonted labour caused a sigh,
The fair-haired lady turned her languid eye
Where the pale moon on ŚIVA'S forehead gleamed.
And swift through all her frame returning vigour streamed.

## Canto Second.

---

### *THE ADDRESS TO BRAHMĀ.*

WHILE impious TĀRAKA in resistless might
Was troubling heaven and earth with wild affright,
To BRAHMĀ'S high abode, by INDRA led,
The mournful deities for refuge fled.
As when the Day-God's loving beams awake
The lotus slumbering on the silver lake,
So BRAHMĀ deigned his glorious face to show,
And poured sweet comfort on their looks of woe.

Then nearer came the suppliant Gods to pay
Honour to him whose face turns every way.
They bowed them low before the Lord of Speech,
And sought with truthful words his heart to reach:
"Glory to Thee! before the world was made,
One single from thy Majesty displayed.
Next Thou, to body forth the mystic Three,
Didst fill three Persons: Glory, Lord, to Thee!
Unborn and unbegotten! from thy hand
The fruitful seed rained down; at thy command
From that small germ o'er quickening waters thrown
All things that move not, all that move have grown.
Before thy triple form in awe they bow:
Maker, preserver, and destroyer, Thou!
Thou, when a longing urged thee to create,
Thy single form in twain didst separate.

The Sire, the Mother that made all things be
By their first union were but parts of Thee.
From them the life that fills this earthly frame,
And fruitful Nature, self-renewing, came.
Thou countest not thy time by mortals' light;
With Thee there is but one vast day and night.
When BRAHMĀ slumbers fainting Nature dies,
When BRAHMĀ wakens all again arise.
Creator of the world, and uncreate!
Endless! all things from Thee their end await.
Before the world wast Thou! each Lord shall fall
Before Thee, mightiest, highest, Lord of all.
Thy self-taught soul thine own deep spirit knows;
Made by thyself thy mighty form arose;
Into the same, when all things have their end,
Shall thy great self, absorbed in Thee, descend.
Lord, who may hope thy essence to declare?
Firm, yet as subtile as the yielding air:
Fixt, all-pervading; ponderous, yet light,
Patent to all, yet hidden from the sight.
Thine are the sacred hymns which mortals raise,
Commencing ever with the word of praise,
With three-toned chant the sacrifice to grace,
And win at last in heaven a blissful place.
They hail Thee Nature labouring to free
The Immortal Soul from low humanity;
Hail Thee the stranger Spirit, unimpressed,
Gazing on Nature from thy lofty rest.
Father of fathers, God of gods art thou,
Creator, highest, hearer of the vow!
Thou art the sacrifice, and Thou the priest,
Thou, he that eateth; Thou, the holy feast.

Thou art the knowledge which by Thee is taught,
The mighty thinker, and the highest thought !"

Pleased with their truthful praise, his favouring eye
He turned upon the dwellers in the sky,
While from four mouths his words in gentle flow
Come welling softly to assuage their woe :
" Welcome ! glad welcome, Princes ! ye who hold
Your lofty sovereignties ordained of old.
But why so mournful ? what has dimmed your light ?
Why shine your faces less divinely bright ?
Like stars that pour forth weaker, paler gleams,
When the fair moon with brighter radiance beams.
O say, in vain doth mighty IRDRA bear
The thunderbolt of heaven, unused to spare ?
VṚTRA, the furious fiend, 'twas strong to slay :
Why dull and blunted is that might to-day ?
See, VARUṆA'S noose hangs idly on his arm,
Like some fell serpent quelled by magic charm.
Weak is KUBERA'S hand, his arm no more
Wields the dread mace it once so proudly bore ;
But like a tree whose boughs are lopped away,
It tells of piercing woe, and dire dismay.
In days of yore how YAMA'S sceptre shone !
Fled are its glories, all its terrors gone ;
Despised and useless as a quenched brand,
All idly now it marks the yielding sand.
Fallen are the Lords of Light, ere now the gaze
Shrank from the coming of their fearful blaze ;
So changed are they, the undazzled eye may see
Like pictured forms, each rayless deity.
Some baffling power has curbed the breezes' swell :
Vainly they chafe against the secret spell.

We know some barrier checks their wonted course,
When refluent waters seek again their source.
The RUDRAS too—fierce demigods who bear
The curved moon hanging from their twisted hair—
Tell by their looks of fear, and shame, and woe,
Of threats now silenced, of a mightier foe.
Glory and power, ye Gods, were yours of right :
Have ye now yielded to some stronger might,
Even as on earth a general law may be
Made powerless by a special text's deeree ?
Then say, my sons, why seek ye BRAHMĀ'S throne ?
'Tis mine to frame the worlds, and yours to guard your own."
Then INDRA turned his thousand glorious eyes,
Glancing like lilies when the soft wind sighs,
And in the Gods' behalf, their mighty chief
Urged the Most Eloquent to tell their grief.
Then rose the heavenly Teacher, by whose side
Dim seemed the glories of the Thousand-eyed,
And with his hands outspread, to BRAHMĀ spake,
Couched on his own dear flower, the daughter of the lake :
" O mighty Being ! surely thou dost know
The unceasing fury of our ruthless foe ;
For thou canst see the secret thoughts that lie
Deep in the heart, yet open to thine eye.
The vengeful TĀRAKA, in resistless might,
Like some dire Comet, gleaming wild affright,
O'er all the worlds an evil influence sheds,
And, in thy favour strong, destruction spreads.
All bow before him : on his palace wall
The sun's first ray and parting splendour fall ;
Ne'er could he waken with a lovelier glance
His own dear lotus from her nightly trance.

For him, proud fiend, the moon no waning knows,
But with unminished full-orbed lustre glows.
Too faint for him the crescent glory set
Amid the blaze of ŚIVA'S coronet.
How fair his garden, where the obedient breeze
Dares steal no blossom from the slumbering trees!
The wild wind checks his blustering pinions there,
And gently whispering fans the balmy air;
While through the inverted year the seasons pour,
To win the demon's grace, their flowery store.
For him, the River-god beneath the stream,
Marks the young pearl increase its silver gleam,
Until, its beauty and its growth complete,
He bears the offering to his master's feet.
The Serpents, led by VĀSUKI, their king,
Across his nightly path their lustre fling;
Bright as a torch their flashing jewels blaze,
Nor wind, nor rain, can dim their dazzling rays.
E'en INDRA, sovereign of the blissful skies,
To gain his love by flattering homage tries,
And sends him oft those flowers of wondrous hue
That on the heavenly tree in beauty grew.
Yet all these offerings brought from day to day,
This flattery, fail his ruthless hand to stay.
Earth, hell, and heaven, beneath his rage must groan,
Till force can hurl him from his evil throne.
Alas! where glowed the bright celestial bowers,
And gentle fair ones nursed the opening flowers,
Where heavenly trees a heavenly odour shed,
O'er a sad desert ruin reigns instead.
He roots up MERU'S sacred peaks, where stray
The fiery coursers of the God of Day,

To form bright slopes, and glittering mounds of ease,
In the broad gardens of his palaces.
There, on his couch, the mighty lord is fanned
To sweetest slumber by a heavenly band;
Poor captive nymphs, who stand in anguish by,
Drop the big tear, and heave the ceaseless sigh.
And now have INDRA'S elephants defiled
The sparkling stream where heavenly GAṄGĀ smiled,
And her gold lotuses the fiend has taken
To deck his pools, and left her all forsaken.
The Gods of heaven no more delight to roam
O'er all the world, far from their glorious home.
They dread the demon's impious might, nor dare
Speed their bright chariots through the fields of air.
And when our worshippers in duty bring
The appointed victims for the offering,
He tears them from the flame with magic art,
While we all powerless watch with drooping heart.
He too has stolen from his master's side
The steed of heavenly race, great INDRA'S pride.
No more our hosts, so glorious once, withstand
The fierce dominion of the demon's hand,
As herbs of healing virtue fail to tame
The sickness raging through the infected frame.
Idly the discus hangs on VIṢṆU'S neck,
And our last hope is vain, that it would check
The haughty TĀRAKA'S might, and flash afar
Ruin and death—the thunderbolt of war.
E'en INDRA'S elephant has felt the might
Of his fierce monsters in the deadly fight,
Which spurn the dust in fury, and defy
The threatening clouds that sail along the sky.

Therefore, O Lord, we seek a chief, that he
May lead the hosts of heaven to victory,
Even as holy men who long to sever
The immortal spirit from its shell for ever,
Seek lovely Virtue's aid to free the soul
From earthly ties and action's base control.
Thus shall he save us: proudly will we go
Under his escort 'gainst the furious foe;
And INDRA, conqueror in turn, shall bring
FORTUNE, dear captive, home with joy and triumphing."
Sweet as the rains—the fresh'ning rains—that pour
On the parched earth when thunders cease to roar,
Were BRAHMĀ'S words: "Gods, I have heard your grief;
Wait ye in patience; time will bring relief.
'Tis not for me, my children, to create
A chief to save you from your mournful fate.
Not by my hand the fiend must be destroyed,
For my kind favour has he once enjoyed;
And well ye know that e'en a poisonous tree
By him who planted it unharmed should be.
He sought it eagerly, and long ago
I gave my favour to your demon-foe,
And stayed his awful penance, that had hurled
Flames, death, and ruin o'er the subject world.
When that great warrior battles for his life,
O, who may conquer in the deadly strife,
Save one of ŚIVA'S seed? He is the light,
Reigning supreme beyond the depths of night.
Nor I, nor VIṢṆU, his full power may share,
Lo, where he dwells in solitude and prayer!
Go, seek the Hermit in the grove alone,
And to the God be UMĀ'S beauty shown.

Perchance, the Mountain-child, with magnet's force,
May turn the iron from its steadfast course,
Bride of the mighty God ; for only she
Can bear to Him as water bears to me.
Then from their love a mighty Child shall rise,
And lead to war the armies of the skies.
Freed by his hand, no more the heavenly maids
Shall twine their glittering hair in mournful braids."
He spake, and vanished from their wondering sight ;
And they sped homeward to their world of light.
But INDRA, still on BRAHMĀ'S words intent,
To KĀMA'S dwelling-place his footsteps bent.
Swiftly he came : the yearning of his will
Made INDRA'S lightning course more speedy still.
The LOVE-GOD, armed with flowers divinely sweet,
In lowly homage bowed before his feet.
Around his neck, where bright love-tokens clung,
Arched like a maiden's brow, his bow was hung,
And blooming SPRING, his constant follower, bore
The manago twig, his weapon famed of yore.

# Canto Third.

## THE DEATH OF LOVE.

IN eager gaze the sovereign of the skies
Looked full on KĀMA with his thousand eyes:
E'en such a gaze as trembling suppliants bend,
When danger threatens, on a mighty friend.

Close by his side, where INDRA bade him rest,
The LOVE-GOD sate, and thus his lord addressed:
"All-knowing INDRA, deign, my Prince, to tell
Thy heart's desire in earth, or heaven, or hell:
Double the favour, mighty sovereign, thou
Hast thought on KĀMA, O, command him now!
Who angers thee by toiling for the prize,
By penance, prayer, or holy sacrifice?
What mortal being dost thou count thy foe?
Speak, I will tame him with my darts and bow.
Has some one feared the endless change of birth,
And sought the path that leads the soul from earth?
Slave to a glancing eye thy foe shall bow,
And own the witchery of a woman's brow;
E'en though the object of thine envious rage
Were taught high wisdom by the immortal sage,
With billowy passions will I whelm his soul,
Like rushing waves that spurn the bank's control.
Or has the ripe full beauty of a spouse,
Too fondly faithful to her bridal vows,

